# वासवदत्ता ।

## महाकवि-सुबन्धुविरचिता ।

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया

तथा

तदात्मजाभ्यां

पण्डित-श्री-आशुबोध-विद्याभूषण-

पण्डित-श्री-नित्यबोध-विद्यारत्नाभ्यां

प्रतिसंस्कृतया च व्याख्यया समलङ्कृता प्रकाशिता च ।

द्वितीय संस्करणम्

कलिकातामहानगर्य्यां

वाचस्पत्ययन्त्रे

मुद्रिता ।

इं १८९३ ।

[illegible]

मूल्यं [illegible]

# वासवदत्ता।

महाकवि-सुबन्धुविरचिता।

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया

तथा

तदात्मजाभ्यां

पण्डित-श्री-आशुबोध-विद्याभूषण-

पण्डित-श्री-नित्यबोध-विद्यारत्नाभ्यां

प्रतिसंस्कृतया च व्याख्यया समलङ्कृता प्रकाशिता च।

द्वितीय संस्करणम्

कलिकातामहानगर्य्यां

वाचस्पत्ययन्त्रे

मुद्रिता।

ई १८२२।



मूल्यं राजतमुद्राद्वयम्।

प्रकाशक—पण्डित-श्रीआशुबोधविद्याभूषण
तथा
पण्डित-श्रीनित्यबोधविद्यारत्न।

प्राप्तिस्थान—२न०, रमानाथ मजुमदार ष्ट्रीट, आम्हार्ष्ट-ष्ट्रीट् पोष्ट-अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।

२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# वासवदत्ता ।

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥
खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु गोपेषु हसन् हरिर्जयति ॥

---

प्रारिप्सितस्य निरन्तरायपरिसमाप्तये कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति । करबदरेति । यत्प्रसादतः सूक्ष्ममतयः कवयोऽखिलं समस्तं भुवनतलं भुवनस्वरूपं करे बदरं बदरीफलम् । फले लुगिति लुक् । तत्सदृशं पश्यन्ति । सा सरस्वती देवी वागधिदेवता जयति सर्वोत्कर्षेण वर्तते । स्वरूपानुद्योतकमिति रुद्रः । अधःस्वरूपयोरस्त्री
इत्यमरः । आर्यावृत्तम् । लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः ।
ऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः । षष्ठे द्वितीयलात् परके न्ले मुखलाच्च
तिपदनियमः । चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः इति लक्षणात् ।
न्नोऽसीति । हे कृष्ण खिन्नोऽसि । गोवर्द्धनधारणादिति भावः । शैलं गोवर्द्धनं मुञ्च वयं बिभृम इति गोपेषु वदत्सु शिथिलभुजः श्लथबाहुः । भरेण गिरिभरेण भुग्नाः कुटिला बाहवो येषां तादृशेषु सत्सु हसन् हरिः कृष्णो जयति । भुजो कौटिल्ये । ओदितश्चेति निष्ठानत्वम् । यस्य च भावेन भावलक्षणमिति गोपेष्वित्यत्र सप्तमी । एकेन त्वयेदं धृतं किमस्माभिर्न धार्यत इति सगर्वतया वयमिति बहुवचनाभिधानमुद्दीपनविभावः । तथा च भरतः । विपरीतालङ्कारैर्विकृताचाराभिधानवेशैश्च । इति । भुजकौटिल्यमनुभावः । तथा च भरतः । विकृताकारैर्वाक्यैरङ्गविकारैश्च विकृतवेशैश्च ।
ति । मुत्फुल्लाननलोचनम् । किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विदो

कठिनतरदामवेष्टनलेखासन्देहदायिनो यस्य ।
राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥
स जयति हिमकरलेखा चकास्ति यस्योमयोत्सुकानिहिता ।
नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ॥
भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्योतः ॥
विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।

---

विदुः ॥ इति भरतः । कृष्णविषयकरतिरूपभावस्य प्राधान्येऽङ्गमिति रसवदलङ्कारोऽयम् । कठिनेति । कठिनतरं यद्दामवेष्टनं तेन लेखा रेखास्तासां सन्देहदायिनो यस्य वलिविभङ्गास्त्रिवलिपङ्क्तयो राजन्ति । स दामोदरो भूतपूर्वगत्या दामोदरता । भवतो युष्मान् पातु । वलिस्त्रिवलिदेहयोरिति विश्वः । दामोदरविषयरतिरूपभावस्य पराङ्गत्वात् प्रेयोऽलङ्कारोऽयम् । स इति । उमयोत्सुकादौत्कण्ठ्यात् । नयनं भालनेत्रं तदेव प्रदीपो दीपस्तस्य कज्जलजिघृक्षया तदीयकज्जलग्रहणेच्छया रजतशुक्तिरिव रौप्यशुक्तिरिव । काजरवटा इति भाषायाम् । निहिता स्थापिता । यस्य हिमकरलेखा चन्द्ररेखा चकास्ति स शिवो जयति । विशेषणद्वारा विशेष्यप्रतिपत्तिरिति हरो लभ्यते । अत्र सुधर्मिता गुणः । यत्र विशेषणद्वारा विशेष्यलाभः सा सुधर्मितेत्यलङ्कारेश्वरः । उत्सुकशब्दोऽत्र भावप्रधानः । यद्वा । असति बध्नातीत्यस् । उत्सुकस्यानुसृकान् उत्कण्ठितबन्धनकर्त्री । अत्युत्कण्ठ्यादिकेति यावत् । असि असि बन्धने । क्विप् । हिमकरलेखाविशेषणम् । ग्रह उपादाने । सन् । अः प्रत्ययादित्यकारप्रत्ययः । अ साम्प्रतिक इति तु जगद्धरस्य प्रमाद एव । औत्सुक्यनाम शृङ्गाररसस्य व्यभिचारिभावः । उमयाधिनिहितेति क्वचित् पाठः । परोवकाशे सर्वथा यमनीयमिति खल्वाम् पश्याद । भवतीति । विस्तारिता अनेकेषां श्रुतिपथं नीताः परेषां स्वातिरिक्तानां गुणाः सरस्वतीलक्ष्मीक्षमादिगणिता येन तस्य सुजनस्य सुभगत्वं सौभाग्यमधिकं भवति । अनुपकृतस्यापि वर्धेत्यर्थः । विकासितानि कुमुदानि येन तादृशः । शरत्कालिक इत्यर्थः । हिमकरोद्योतश्चन्द्रातपो द्विगुणरुचं वर्षाकालिकापेक्षयाधिकां कान्तिं वहति । अर्थान्तरन्यासोऽलङ्कारः । उक्तिरर्थान्तरन्यासः स्यात् सामान्यविशेषयोः । प्रकाशो द्योत आतप इत्यमरः । विषधरेति । विषधरतोऽपि सर्पादपि खलो दुर्जनोऽतिविषमोऽतिक्रूर इति विद्वांसः पण्डिता मृषा

यदयं न कुलद्वेषी सकुलद्वेषी पुनः पिशुनः ॥
अतिमलिने कर्त्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते चक्षुः ॥
विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाभ्यधिकः ॥
हस्त इव भूतिमलिनो यथा यथा लङ्घयति खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥

---

मिथ्या न वदन्ति अपि तु तथ्यमेव । यतोऽयं सर्पः न कुलं द्वेष्टि शीलमस्य तादृक् । यथापराधी तमेव दशति न तु तत्कुलं द्वेष्टीत्यर्थः । पिशुनो दुर्जनः पुनः सकुलद्वेषी । योऽस्य द्वेषविषयस्तस्य सकुलस्यापि द्वेष्टेत्यर्थः । पक्षे नकुलो द्वेषो द्वेष्टा शत्रुर्यस्य । स सर्पभेदः पिशुनः कुलद्वेषी स्वकुलद्वेष्टा । पिशुनो दुर्जनः खलः । आशीविषो विषधर इति इत्यमरः । सभङ्गश्लेषार्थान्तरन्यासयोः सङ्करः । सामान्यं वा विशेषो वा तदन्येन समर्थ्यते । यत्र सोऽर्थान्तरन्यासः । अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वे तु सङ्करः ॥ अतिमलिन इति । खलानां पिशुनानां धीर्बुद्धिरतिमलिने सतामनुपादेये कर्त्तव्ये कार्येऽतीवात्यन्तं निपुणा स्वविषयग्रहणपटुर्भवति । हि यतस्तिमिरेऽन्धकारे कौशिकानामुलूकानां चक्षु रूपं स्वविषयं प्रतिपद्यते गृह्णाति । यद्वा । रूपं विषयग्राहकत्वरूपं स्वभावं प्रतिपद्यते प्राप्नोति । रूपं स्वभावे सौन्दर्ये शुक्लादिरूपभेदयोः । इति विश्वः । अतीवेत्यव्ययमत्युदर्थोऽतिशये । महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिक इत्यमरः । काव्यलिङ्गमलङ्कारः । समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् । विध्वस्तेति । विध्वस्तपरगुणानां खलानामतीव मलिनत्वं भवति । अव्ययानामनेकार्थत्वादपि हेतौ । अपि यतोऽन्तरितशशिरुचां छादितचन्द्रकान्तीनां सलिलमुचाम् । हेतुगर्भम् । वर्षाकालिकमेघानां मलिनिमा । इमनिजन्तः । मालिन्यमधिकं भवति । परिकरालङ्कारः । अलङ्कारः परिकरः साभिप्राये विशेषणे । दुर्जनोऽस्मान् स्वोत्कर्षार्थं निन्दति तत्राभिनिवेशो व्यर्थ एवेति सदर्थमाह । हस्त इवेति । खलो भूतिमलिनो हस्त इव यथा यथा सुजनं लङ्घयत्युल्लङ्घयति । पक्षे । घर्षयति । तं सुजनं दर्पणमिव तथा तथा निर्मलच्छायमुज्ज्वलकान्तिं कुरुते । भूतिर्भस्मनि सम्पदि । दर्पणे मुकुरादर्शौ । छाया सूर्यप्रिया कान्तिरिति विश्वमरः । पूर्णोपमा । साधर्म्यमुपमाभेदे । वर्त्तमानकालिकान् नृपतीन्

सा रसवत्ता विहता नवका विलसन्ति चरति नो कं कः ।
सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये ॥
अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला ॥
गुणिनामपि निजरूपप्रतिपत्तिः परत एव सम्भवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥

---

स्वस्तवनायोग्यान् ध्वनयन् विक्रमादित्यं स्तौति । सा रसेति । विक्रमादित्ये राजनि सरसीव सरोवर इव कीर्त्तिशेषं गतवति विरामं प्राप्ते सति भुवि पृथिव्यां सा पुरुषान्तरेऽनुपलभ्यमाना रसवत्ता वीर्य्यवत्ता विहता नष्टा । नवकाः कुत्सित इति कन् । कुत्सितनवराजा विलसन्ति विलासं कुर्वन्ति । अतः कः खलः कं निर्बलं नो चरति न भक्षति । अत्यर्थं पीडयतीति यावत् । अराजन्यत्वादिति भावः । यद्वा । नवका अज्ञात इति कन् । अज्ञातनामगोत्रगुणा राजानो विलसन्ति । अतः को जनः कं व्यवहारं नो चरति न करोति । हेतुस्तूक्त एव । यद्वा । सा रसवत्ता शृङ्गारादिरसवत्ता गुणवत्ता वा ध्वनी साभिलाषता वा विहता । अतो नवका अनुकम्पायां कन् । अनुकम्पितनवीनकवयो विलसन्ति । गुणग्रहीत्रभावेनाक्षरादीनां प्रचारराहित्येनेति भावः । अतः कस्तादृक् पण्डितम्मन्यः कं मूर्द्धानं नो चरति न गच्छति नारोहति । अपि त्वारोहत्येव । पक्षे । सा रसवत्ता जलवत्ता विहता । अत एव बकाः कङ्का भाषायां बकुला इति ख्याता न विलसन्ति । कङ्को लोहपृष्ठः कङ्कड इति ख्यातो नो चरति । यद्वा । सारसः पक्षिविशेषस्तद्वत्ता । कमलवत्ता वा । शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः । अथ बक कङ्कः पुष्कराह्वस्तु सारसः । लोहपृष्ठस्तु कङ्कः स्यात् । कासारः सरसी सरः । कं शिरोऽम्बुनोः । सारसं सरसीरुहम् । इति षट्स्वमरः । चर गतिभक्षणयोः । सभङ्गाभङ्गश्लेषयोः संसृष्टिः । शेषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः । अविदितेति । अविज्ञाता गुणा ओजःप्रसादमाधुर्य्यरूपा यस्यास्तादृश्यपि सत्कविभणितिः कर्णेषु मधुधारां क्षौद्रधारां वमत्युद्गिरति । यथा क्षौद्रधारास्वादनासुखमेवं सत्कविभणितिश्रवणात् कर्णयोः सुखमित्यर्थः । हि यतोऽनधिगतपरिमलाऽपि मालतीमाला दृशमनुवातस्थितस्य द्रष्टुं हरति । गुणिनामिति । गुणिनामपि निजरूपप्रतिपत्तिः स्वरूपज्ञानं परत एव परस्मादेव सम्भवति । तेन निर्गुणानां स्वरूपज्ञानं परस्मादत्र किमाश्चर्य्यम् । यस्मा-

कशिपुच्छेददानविस्मयः कृष्ण इव कृतवसुदेवतर्पणो नारायण इव सौकर्यसमासादितधरणिमण्डलः कंसारातिरिव जनितयशोदानन्दसमृद्धिरानकदुन्दुभिरिव कृतकाव्यादरः सागरशायीवानन्त-

वाग्भटालङ्कारः। काव्यप्रकाशरीत्या वृत्त्यनुप्रासः। एकस्याप्यसकृत् परः इति। काव्यादर्शरीत्या वक्ष्यमाणाः समानोपमाः। सरूपशब्दवाच्यत्वात् सा समानोपमा मता। बालेवोद्यानमालेयं सालकाननशोभिनी। इति। अलङ्कारशेखररीत्या श्लेषोपमेयम्। पदश्लेषनिबन्धनं साम्यं श्लेषोपमा। उक्तमेवोदाहरणं मतान्तरे। श्लेषोपमालङ्कार-माह। नृसिंह इव दर्शितो हिरण्यकशिपोर्दैत्यस्य च्छेददानेन शरीरखण्डनेन विस्मयो येन सः। दोऽवखण्डने। पक्षे हिरण्यं सुवर्णं कशिपुर्भोजनाच्छादने क्षेत्रं केदारस्तेषां दानेन वितरणेन शेषं प्राप्नवत्। एकमर्थेऽपि। कशिपुस्त्वन्नमाच्छादनं द्वयमित्यमरः। अन्नवस्त्रदविषादद इति भावः। क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः। इति विश्वप्रकाशः। वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः। श्लिष्यन्ति शब्दाः श्लेषोऽसाव-क्षरादिभिरष्टधा॥ कृष्ण इव कृतं वसुदेवस्य तर्पणं तृप्ती रक्षणं वा येन बहणात् वा कंसाद्वा धातूनामनेकार्थत्वात् रक्षणार्थस्तृपिः। तर्पणं प्रीणनावनमित्यमरः। पक्षे कृतं वसुभिर्द्रव्यैर्देवानां तर्पणं प्रीणनं येन। यद्वा कृतं वसूनां ध्रुवादीनां देवानां च तर्पणं येन। ध्रुवो धरश्च सोमश्च आपश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वस्वष्टौ वसवः स्मृताः। नारायण इव सौकर्येण सूकरभावेन समासादितमुद्धृतं धरणिमण्डलं येन। ब्राह्मणादित्वाद्भावे ष्यञ्। तालव्या अपि दन्त्याः स्युः शम्ब-सूकरपांसवः। इति प्रकारभेदः। पक्षे सौकर्येणानायासेन समासादितमा-क्रान्तम्। सौकर्यं स्यादनायासे क्रियायां सूकरस्य चेति विश्वप्रकाशः। कंसारातिरिव जनिता यशोदानन्दयोः समृद्धिरुत्कर्षाधिक्यं येन। यशोदाया आनन्दसमृद्धिर्वा येन। पक्षे आनन्दकारिणी समृद्धिः शालपार्थिवादिः। जनिता यशोदा कीर्तिप्रदानन्दसमृद्धि-र्येन। पदांशातिरिक्ते निर्वाण इति ध्वनिः। आनकदुन्दुभिरिव कृतः काव्यायाः पूतनायाः दरस्त्रासो येन। यद्वा। कृतकाव्यौ तत्पक्षौ तयोरादरो यस्येति गुह्यचरणाः। वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः। इति विष्णुप्रकरणेऽमरः। दरस्त्रासो भीतिर्भीरिति च। काव्यं पद्ये पुमान् शुक्रे काव्याख्या पूतना मता इति विश्वः। पक्षे कृतः काव्ये लोकोत्तरवर्णनरूपे कर्मण्यादरो येन। यद्वा कृत-काव्यानां कवीनामादरो यस्मात्। यथाऽसौ ममाभिज्ञतया कवीन् मानयति तथा नान्य

भोगिचूडामणिमरीचिरञ्जितपादपद्मो वरुण इवाशान्तरक्षणो-ऽगस्त्य इव दक्षिणाशाप्रसाधको जलनिधिरिव वाहिनीशतनायकः समकरप्रचारश्च हर इव महासेनानुगतो निवर्तितमारश्च मेरु-रिव विबुधालयो विश्वकर्माश्रयश्च रविरिव क्षणदानप्रियश्छाया-सन्तापहरश्च कुसुमकेतुरिव जनितानिरुद्धसम्पद्रतिसुखप्रदश्च

---

इति भावः। सागरशायीव। नारायण इव। अनन्तभोगी शेषस्तस्य चूडामणिमरीचिभी रञ्जितपादपद्मः। शेषोऽनन्तः इत्यमरः। पक्षेऽनन्ता अनेके भोगिनो विलासिनः। न केवलं स्वभृत्यैः शेषैरपि तु महद्भिः पौरैरपीति भावः। वरुण इव। आशा पश्चिमदिक् तदन्ते रक्षणं यस्य। दिशस्तु ककुभः काष्ठा आशाश्चेत्यमरः। पक्षेऽशान्तमविरतं रक्षणं प्रजापालनं यस्य। अगस्त्य इव दक्षिणाशा दक्षिणदिक् तस्याः प्रसाधकोऽलङ्कर्ता। पक्षे दक्षिणाया आशा तृष्णा। आशा तृष्णादिशोः प्रोक्तेति विश्वप्रकाशः। यद्वा दक्षिणानां कुशलानां परच्छन्दानुवर्त्तिनां आशाप्रसाधकः। दक्षिणः सरलेऽवामे परच्छन्दानुवर्त्तिनि। वाच्यवद्दक्षिणावाचौ यज्ञदानप्रतिष्ठयोः। इति विश्वप्रकाशः। जलनिधिरिव। वाहिनीशतस्य नदीशतस्य नायकः। मकराणां जलजन्तुविशेषाणां प्रचारेण सहितश्चाहक्। अथ यादांसि जलजन्तवः। तद्भेदाः शिशुमाररोहितगङ्गो मकरादयः। इत्यमरः। पक्षे वाहिनीशतस्य सेनाशतस्य नायकः प्रभुः। समो हिताहितसाधारणः करस्य राजग्राह्यभागस्य प्रचारो यस्य। यद्वा समः सम्पूर्णः करस्य हस्तस्य प्रचारो यस्य। तरङ्गिण्यां च सेनायां वाहिनी परिकीर्त्तिता। इति विश्वः। बलिहस्तांशवः कराः इत्यमरः। हर इव महासेनेन कार्त्तिकेयेनानुगतः। निवर्त्तितो मारः कामो येन। कार्त्तिकेयो महासेनः। मदनो मन्मथो मार इत्युभयत्राप्यमरः। पक्षे महत्या सेनयाऽनुगतः। निवर्त्तितो मारयतीति मारो विघ्नो येन। मृङ् प्राणत्यागे णिजन्तादच्। मेरुरिव विबुधानां देवानामालयः। विश्वकर्मा सूर्यो देवशिल्पी वा तदाश्रयः। विश्वकर्मा देवशिल्पी विश्वकर्मा दिवाकरः। इति विश्वः। पक्षे विबुधानां पण्डितानामालयः। विश्वेषां जनानां कर्म शिल्पादि तदाश्रयः। रविरिव क्षणदा रात्रिर्न प्रियेष्टा यस्य। छायाया निजाङ्गनायाः सन्तापहरश्च। न प्रियेत्यत्र नैकधेत्यादिवद्विशेषार्थको न शब्दः। पक्षे क्षणेषूत्सवेषु दानं प्रियं यस्य। छायया स्वकान्त्या सन्तापहरः। एतच्छायाश्रयत्वाह्लादजनकत्वादिति भावः। अथ क्षण उद्धर्षो मह उद्धव उत्सवः। छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमना-

विद्याधरोऽपि सुमना धृतराष्ट्रोऽपि गुणप्रियः क्षमानुगतोऽपि सुधर्माश्रितो बृहन्नलानुभावोऽप्यन्तःसरलो महिषीसम्भवोऽपि हर्षोत्पादतरलोऽपि महानायको राजा चिन्तामणिर्नाम। यत्र

---

तपः। इति द्वयोरमरः। कुसुमकेतुरिव काम इव जनितानिरुद्धस्योषापतेः सम्पद्येन। रतेः प्रियायाः सुखप्रदश्च। कन्दर्पः पुष्पकेतनः। अस्यैव प्रकरणे रतिः प्रिया सुतोऽनिरुद्ध ऋष्यङ्क उषेश इति विषु हेतः। पक्षे जनितानिरुद्धानिवारिता सम्पत्तिर्येन। रतौ सुरतेऽनेककामतन्त्रकलाभिज्ञतया सुखप्रदः। विरोधाभासेनाह। विद्याधरोऽपि देवयोनिविशेषोऽपि सुमना देव इति विरोधः। विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः॥ सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः। इति द्वयोरमरः। विद्याधरोऽष्टादशविद्यानिधिः। सुमनास्त्रिविधमानसपापरहित इति परिहारः। त्रीणि चोक्तानि मनुना। परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं मानसं स्मृतम्॥ इति। आभासत्वे विरोधस्य विरोधाभास इष्यते। काव्यप्रकाशे त्वयमेव विरोध इति व्यवहृतः। विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः। इति। एवमग्रेऽपि। अपिरापाततो विरोधस्य द्योतकः। पदान्तरेऽनेकार्थत्वात् समुच्चयस्य। धृतराष्ट्रोऽपि पाण्डोरग्रजोऽपि गुणप्रियः। भीमप्रिय इति विरोधः। गुणोऽप्रधाने शुक्लादौ गुणः सूदे वृकोदरे। इति विश्वः। धृतराष्ट्रो धृतराज्यः। गुणप्रियः सन्धिविग्रहादिषड्गुणप्रिय इत्यविरोधः। सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणा इत्यमरः। क्षमानुगतोऽपि पृथिव्यनुगतोऽपि सुधर्माश्रितो देवसभाश्रित इति विरोधः। क्षमा शान्तिः क्षमा धरित्रि विश्वः। स्यात् सुधर्मा देवसभेत्यमरः। क्षमानुगतः शान्तियुक्तः सुधर्माश्रितः शोभनधर्माश्रित इत्यविरोधः। बृहन्महान् यो नलस्तस्य भेदस्तस्येवानुभावो यस्य। यथा यवानपेक्षः सोऽभिवर्धते तथाऽग्रपोत्थः। तादृशोऽप्यन्तर्मध्ये सरलो ग्रन्थिरहित इति विरोधः। बृहन्नलानुभावोऽर्जुनानुभावोऽन्तःसरल इति परिहारः। बृहन्नलो गुडाकेशे नले कौशिकनन्दने। इति विश्वः। महिष्याः सम्भवो यस्य तादृशो महिषो हर्षोत्पादी हर्षजनक इति महोत्पात इति विरोधः। महिष्याः कृताभिषेकायाः सम्भवो यस्य हर्षोत्पादी धर्मजनक इति परिहारः। कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः। पुण्यश्रेयसी सुकृतं वृष इत्युभयत्रामरः। तरलोऽपि हारमध्यमणिभिन्नोऽपि महानायको हारमध्यमणिरिति विरोधः। तरलो

च शासति धरणिमण्डलं छलनिग्रहप्रयोगो वादेषु नास्तिकता चार्वाकेषु कण्टकयोगो नियोगेषु परीवादो वीणासु खलसंयोगः शालिषु द्विजिह्वसङ्ग्रहीतिराहितुण्डिकेषु करच्छेदः कृषकरग्रहणेषु नेत्रोत्पाटनं मुनीनां द्विजराजविरुद्धता पङ्कजानां सार्वभौमयोगो दिग्गजस्याग्नितुलाशुद्धिः सुवर्णानां सूचीभेदो मणीनां शूलभङ्गो

हारमध्यग इत्यमरः। नायको नेतरि श्रेष्ठे हारमध्यमणावपि। इति विश्वः। अतरलो धीरो महान् नायको नेता महानायक इति परिहारः। परिसङ्ख्यायाह। काव्यादृष्टेष्वनियमश्चैषोऽयम। यत्र चिन्तामणौ। छलो वाक्छलो निग्रहः प्रतिज्ञाहान्यादिस्तेषां प्रयोगो वादेषु। पक्षे छलं कपटः। निग्रहो बन्धनम्। सादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता। नास्तिकता परलोकाभावज्ञानवत्त्वं चार्वाकेषु बौद्धविशेषेषु। भावे तल्। अस्ति नास्ति दिष्टं मतिरिति ठक्। तावानेव हि लोकोऽयं यावानिन्द्रियगोचरः। इति सिद्धान्तः। मिथ्यादृष्टिर्नास्तिकतेत्यमरः। पक्षे नास्तिकता दरिद्रता। कण्टकः अनेनेदं भुक्तमिति तत्स्वामिनि कथकस्तस्य योगो नियोगेषु। मोहासिवा इति भाषायाम्। पक्षे। कण्टकः क्षुद्रशत्रुः। कण्टकः क्षुद्रशत्रौ च कर्मस्थानिकदूषणे। इति विश्वः। परीवादो वीणावादनवस्तु। पक्षे परीवादोऽपवादः। परीवादोऽपवादे स्याद्वीणावादनवस्तुनि। इति मेदिनी। खलं धान्यमर्दनभूमिः। खलं भूस्थानकल्केषु क्रूरे नीचेऽधमे खलः। इति विश्वप्रकाशः। पक्षे खलः पिशुनः। पिशुनो दुर्जनः खल इत्यमरः। आहितुण्डिकेषु व्यालग्राहिषु द्विजिह्वसङ्ग्रहीतिः सर्पसङ्ग्रहः। व्यालग्राह्याहितुण्डिक इत्यमरः। पक्षे द्विजिह्वः खलः। द्विजिह्वः पन्नगे पुंसि खले स्यादन्यलिङ्गकः। इति रन्तिः। अहितुण्डेन दीव्यति। तेन दीव्यतीति ठक्। कृषकरग्रहणेषु राजग्राह्यभागेषु करच्छेदस्यैव न्यूनीकरणम्। पूर्वनिश्चितादपि प्रार्थनादिना न्यूनग्रहणमित्यर्थः। पक्षे करच्छेदो हस्तच्छेदः। बलिहस्तांशवः करा इत्यमरः। विरोधाभासपरिसङ्ख्यासङ्करेणाह। मुनीनां यतीनां नेत्रमपि। पक्षे मुनीनां वृक्षविशेषाणां नेत्रोत्पाटनं मूलोत्पाटनम्। तरुमूलाशिवस्त्रेषु नेत्रमार्थगुणे रथे। मुनिर्यतौऽङ्कोटक-पियालागस्त्यकिंशुके ॥ इति द्वयोर्विश्वः। पङ्कजानां कमलानां द्विजराजश्चन्द्रस्तद्विरुद्धता। द्विजराजः शशधर इत्यमरः। पक्षे द्विजा ब्राह्मणाः पक्षिणो वा ते च राजानश्च। दन्तविप्राण्डजा द्विजा इत्यमरः। सार्वभौमो रूढः सार्वभौमशब्दस्य योगो दिग्गजस्य। सर्वभूमिपृथिवीभ्यामिति व्युत्पन्नस्य त्वितद्राजभिन्ने नास्ति प्रयोग इत्यर्थः।

युवतिप्रसवे दुःशासनदर्शनं भारते करपत्त्रदारणं जलजानाम्। महावराहो गोत्रोद्धरणप्रवृत्तोऽपि गोत्रोद्दलनमकरोत्। राघवः परिहरन्नपि जनकभुवं जनकभुवा सह वनं विवेश। भरतो रामे दर्शितभक्तिरपि राज्ये विराममकरोत्। नलस्य दमयन्त्या मिलितस्यापि पुनर्भूपरिग्रहो जातः। पृथुरपि गोत्रसमुत्सारण-

---

सुतं च। न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति बहुवचनात्पाठे तु पक्षेऽर्थपरत्वं राजपक्षे पूर्ववच्छब्दपरत्वम्। सार्वभौमस्तु दिङ्नागे सार्वपृथ्वीपतावपि। इति विश्वमेदिन्यौ। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः। इत्यमरः। अग्निना तुलया च शुद्धिर्वर्णान्तरयोगानाम्। सुवर्णानाम्। व्यक्त्यभिप्रायेण बहुवचनम्। तादृशशुद्धियोग्यानामन्येषामभावादिति भावः। सूची लोहं सीवनसाधनं तेन भेदो मणीनाम्। न तु सूची करायभिनयस्तस्य भेदः। सर्वेषां नर्तकनर्तकीनां परिनिष्ठितत्वादिति भावः। यद्वा सूची नारीणां करणान्तरं गीताङ्गहारसंवेशक्रिया। तस्या भेद इति भावः। एतेनास्य राज्ये सपत्नीज्येष्ठा-कनिष्ठाव्यवहाराभावो ध्वनितः। करणं साधने क्षेत्रे गात्रकायस्थकर्मसु। गीताङ्गहार-संवेश-क्रियाभटेन्द्रियेषु च॥ इति विश्वप्रकाशः। सूची करायभिनये नारीणां करणान्तरे। सूची सीवनद्रव्ये इति च। शूलेनोदरपीडया भङ्ग आमर्दः। भङ्गो चामर्दने। न तु शूलेन दुष्टपापिवधोपायेन भङ्गः। तादृशापराधिनोऽभावादिति भावः। यद्वा शूलः केतनं तस्य भङ्गः। मृत्यौ प्रहरणे शूलः केतने योगरोगयोः। इति विश्वप्रकाशः। दुःशासनस्य धार्तराष्ट्रस्य दर्शनं ज्ञानम्। न तु दुष्टशासनस्य निरीक्षणम्। करैः सूर्य-किरणैः पत्त्रदारणं दलानां विकासनं पङ्कजानाम्। न तु करपत्त्रेण क्रकचेन दारणम्। क्रकचोऽस्त्री करपत्त्रमित्यमरः। करपत इति भाषायाम्। विरोधाभासेनाह। महा-वराहो गोत्रोद्धरणाय पृथिव्युद्धरणाय प्रवृत्तोऽपि गोत्रोद्दलनमकरोत्। यदुद्धरणाय प्रवृत्तस्तस्यैवोद्दलनमनुचितम्। गोत्रः पर्वत इत्यर्थान्तरेण परिहारः। एवमग्रेऽपि। जनकभूः पितृभूमिः। पक्षे जनकभुवा सीतया। विरामो रामाभावो वैराग्यं च। दमयन्त्या मिलितस्यापि नलस्य पुनर्भूपरिग्रहः पुनरूढापरिग्रहः। पुनरक्षतयोनित्वादुह्यते या यथाविधि। सा पुनर्भूः। पक्षे पुनर्द्वितीयवारं भूपरिग्रहः पृथ्वीपरिग्रहः। गोत्राणां स्वगोत्रजानां स्ववंशजविरोधिता विरोधः। गोत्राणां पर्वतानामिति परिहारः। इत्थं

ऽप्यस्य विस्मयः सदा हिमकराश्रयोऽमृतमयः सपोतस्तस्याचलो नक्रोधो महानदीनः समुद्रः। स चन्द्र इव चणदानन्दकरः कुमुदवनबन्धुः सकलकलाकुलगृहं नताराति‍बलः। मित्रो

कान्तारः कम्पिताखिलकाननः। पावकाग्रेसरी वह्निसहायः। नभोगेषु मेघेषूत्सुक उत्कण्ठितः। तथा च कालिदासः। मरुत्सखस्येव बलाहकस्येति। सुमनसः पुष्पाणि हरति तादृशः। तथा च कालिदासः। हन्तग्रथं हरति पुष्पमनोकहानामिति। सुमना: पुष्पमालत्योस्त्रियां पुंसि कोविदेऽपि च। इति विश्वप्रकाशः। स्त्रियः सुमनसः पुष्पमित्यमरः। कान्तारः कानने वेणौ दुर्भिक्षे दुर्गवर्त्मनि इति विश्वः। रत्नानामुत्तमवस्तूनामाकरः। रत्नं स्वजातिश्रेष्ठेऽपीत्यमरः। वह्निरिवाहि: खलस्तन्मयो न भवतीत्यनहिमयः। कथम्। अगाधः गभीराशयः। यद्वा। खिन्नारहितः। गर्धा खिन्नमित्यमरः। समर्याद उचितानतिक्रमणशीलः। उन्नत उच्छ्रितः रोको दीप्तिर्यस्य सः। रुच दीप्तौ। घञ्। इत्यप्यस्य न विस्मयः। चलुस्त्वादस्य दीप्तेर्न नाश इति भावः। तथा चोक्तम्। देहीति वचनद्वारा देहस्थाः पञ्च देवताः। ततक्षणादेव नश्यन्ति धीश्रीह्रीकान्तिकीर्तयः। इति। किञ्च। स पार्थः पार्थिवान् सर्वान् भूमिष्ठोऽपि रथस्थितान्। एको निवारयामास लोभः सर्वगुणानिव॥ इति। यद्वा। अस्योद्र इति न कोऽपि विस्मयः। जलाधिटगीनस्याखोटनद्धाटकत्वादिति भावः। सदा हिमकरश्चन्द्रस्तस्य आश्रयो गृहं यस्य। अमृतमयः। आह्लादकरूपवत्त्वात्। सपोतः सबालकः। पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः। इत्यमरः। तस्य क्रोधोऽचलो न प्रणिपाताद्यनपनेयो न भवतीति भावः। महान् श्रेष्ठः। अदीनः। समुद्रः। मुद्रा राजचिह्नं तत्सहितः। पक्षेऽगाधजलस्यगर्भरहितः। मर्यादा सीमा अस्योद्र इति न कोऽपि विस्मयः। उद्रो जलमार्जारः। सदा हि निश्चयेन मकराणां जलजन्तूनामाश्रयः। यद्वा हिमकरश्चन्द्रः। अमृतं सुधा जलं वा। पयः कीलालममृतम्। पीयूषममृतं सुधा। इत्युभयत्रामरः। पोतो यानपात्रम्। यानपात्रं तु पोतोऽब्धि-भवे विषु समुद्रियम्। इत्यमरः। तस्याचोऽचलो मैनाकः। नक्रः कुम्भीरः। नकस्तु कुम्भीर इत्यमरः। स चन्द्रः। चदि आह्लादे। स्फायितञ्चिवञ्चीति रक्। चणदानां सुखप्रदानामानन्दकर्त्ता। सुखिते रतान् सन्तोषयतीत्यर्थः। यद्वा। चणद उत्सवप्रदस्यामाबानन्दकरश्च। मुदावनं मुदवनं कोः पृथिव्या मुदवनं तेन बन्धुरिव बन्धुः। यथा च कालिदासः। तेनार्थवाल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान्। तेनास लोकः

[illegible]नुः काञ्चनशोभां बिभ्रदचलाधिकलक्ष्मीः सुमेरुरिव। यस्य रिपुवर्गः सदा पार्थोऽपि न महाभारतरणयोग्यः, भीष्मोऽप्यशान्तनवेहितः, सानुचरोऽपि न गोत्रभूषितः। अपि च त्रिशङ्कुरिव नक्षत्रपथस्खलितः, शङ्करोऽपि न विषादी, पावकोऽपि न कृष्णवर्त्मा, आश्रयाशोऽपि न दहनः, नान्तक इवाकस्मादपहृत-

[illegible]नष्टमान् जित्वा तेनैव शोकापनोदेन पुनः। गाम आगत इतिवत् कोऽप्यनुपचारः। [illegible]स्वायत्तुःषष्टिकलाः। नतमरातिमलं यस्मात्। पक्षे—अपटा रात्रिः। कमदं केरवम्। कलाः षोडश कलाः। न तारा नक्षत्राण्यतिवला यस्मात्। मितं मुहूर्तम्। कि[illegible] चकारो वाऽर्थे, का वा शोभा न विद्यते? अचला स्थिरा, अधिका लक्ष्मीर्यस्य। पक्षे—मित्रः सूर्यः। काञ्चनं सुवर्णम्। अचलेभ्यः पर्वतेभ्योऽधिका लक्ष्मीर्यस्य। ("अथ मित्रं सखा सुहृत्"। "द्युमणिस्तरणिर्मित्रः" इत्युभयत्राप्यमरः) पुनर्विरोधाभासेनाह—पार्थोऽर्जुनस्तस्य महाभारतरणयोग्यतानिषेधो विरोधः। एवमग्रेऽपि। पक्षे—यस्य रिपुवर्गो महतो भारस्य रणे योग्योऽपि न, अत एव सदा सर्वकालेऽपार्थः अपगतोऽर्थः प्रयोजनं यस्य तादृशः। भीष्मोऽपि शान्तनुपुत्रोऽपि, अशान्तनवे पितृभिन्नाय हितः, विवे न हित इति विरोधः। भीष्मो राजगुणैर्भयानकः; तथाच कालिदासः,—"भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्। अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः॥" इति। ("दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्" इत्यमरः) अशान्तमनशमितं नवं स्तुत्यमीहितं चेष्टितं यस्य; [णु स्तवने इत्यस्मात् कर्तरि अप्] यद्वा—नवं नवीनमन्येभ्यो विलक्षणम्। शान्तनुवाचकः शब्दो दीर्घादिः शान्तनुरित्यपि; तथाच विविक्रमभट्टः शान्तनुतनयः इति, तत्र शान्तनोस्तनयः शान्तनुतनय इत्येकोऽर्थः। पक्षे—शान्तौ नुतौ नयो यस्येति। सानुषु शिखरेषु चरति तादृशोऽपि न गोत्रभुवि पर्वतभूमावुषितः स्थित इति विरोधः। अनुचरैः सेवकैः सहितः; न गोत्रैर्वंशैर्भूषित इति परिहारः, स्वयमेव तेषां भूषक इत्यर्थः। [नञर्थकनशब्देन सुप्सुपेति समासः] त्रिशङ्कुरिव नक्षत्रपथस्खलितः। नक्षत्रपथं आकाशं। पक्षे—अव-पथात् अवधमात्। शङ्करः शिवो विषादी विषभक्षक नेति विरोधः। शङ्करः सुखकरः, न विषादी न दुःखीति परिहारः। पावकोऽग्निरं[illegible]ः [illegible] [illegible]र्त्मा नाग्निरिति विरोधः। पावकोऽन्येषां पवित्रकर्ता न कृष्णवर्त्मा न दुराचार [illegible] [illegible]रः। ("वह्निः शुष्मा कृष्णवर्त्मा कृशानुः पावकोऽनलः" इत्यमरः। "कृष्णवर्त्मा हुताशे स्याद्दुराचारे विधुन्तुदे" इति विश्वप्रकाशः) आश्रयाशोऽपि वह्निरपि न दहनो न वह्निरिति

जीवन:, न राहुरिव मित्रमण्डलग्रहणविवर्द्धितरुचि:, न नल इव कलिविघटित:, न चक्रीव शृगालवधस्तुतिसमुल्लसित:, नन्दगोप इव यशोदयाऽऽश्रित:, जरासन्ध इव घटितसन्धिविग्रह:, भार्गव इव सदा नभोग:, दशरथ इव सुमित्रोपेत: सुमन्त्राधिष्ठितश्च, दिलीप इव सुदक्षिणानुरक्तो रक्षितगुश्च, राम इव जनित कुशलवयोरूपोत्कर्ष:।

तस्य च पारिजात इवाश्रितनन्दन:, हिमालय इव जनित-

---

विरोध:। आशयाशामाशा तृष्णा यस्मिन्नाशयाश:; न दहनो नेत्राणां सन्तापक इति परिहार:। ("आशयाशो बृहद्भानु: दहनो हव्यवाहन:" इत्यमर:) नान्तक इव ... इवान्तकात् सहसा अपहृतं जीवनं जीवितं येन। पक्षे—जीवनं जीविका [... ल्युट्] न राहुरिव मित्रमण्डलग्रहणेन सूर्यमण्डलग्रहणेन विवर्द्धिता रुचिर्दीप्तिर्यस्य स:। पक्षे—सुहृद्राज्यग्रहणे विवर्द्धिता रुचिरिच्छा येन स:। न नल इव कलिना युगविशेषेण विघटितो व्याप्त:। पक्षे—कलि: कलह:। न चक्रीव कृष्ण इव शृगालस्य राजविशेषस्य वधेन मारणेन स्तुत्या समुल्लसित:। पक्षे—शृगाल: कातर:। ("शृगालो जम्बुके भीरु यूर्ते वै पार्थिवान्तरे" इति विश्व:। कोशे दानवान्तर इति पाठस्तत्र एतन्मूलक एव भ्रमश्चरम:) नन्दगोप इव यशोदया तन्नामनिजस्त्रियाऽन्वित:। पक्षे—यशसा दयया च। जरासन्ध इव घटितसन्धिविग्रह: शरीरं यस्य। पक्षे—घटितौ सन्धिविग्रहौ येन स:। भार्गव इव शुक्र इव, सदा सर्वदा नभोग आकाशगामी। पक्ष—दानभोगाभ्यां सहित:। दशरथ इव सुमित्रया लक्ष्मणजनन्यापेतो युक्त:, सुमन्त्रनाम्नाभिधानसारथिना अधिष्ठित आश्रितश्च। पक्षे—सुमित्रैरुत्तमसुहृद्‌भि:, सुमन्त्रैश्च श्रीमन्त्रणादिभि:। दिलीप इव सुदक्षिणायां तन्नाम्न्यां पत्न्यामनुरक्त आसक्त:, रक्षिता पालिता गौर्नन्दिनी येन तादृशश्च। पक्षे—सुदक्षिणायां पात्रे दानव्यये, रक्षिता गौ: पृथ्वी वाणी वा येन स:। ("स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ:" इत्यमर:) राम इव जनित: कुशलवयो: रूपस्य सौन्दर्यस्योत्कर्षाय गौरवं यस्मिन्। पक्षे—रामे यथा रूपोत्कर्षस्तथा जनितकुशलवयो:। विमतिर्विशेषोऽयं नीलोत्पलस्पर्द्धिनी नेत्रे तनयं स्वीकृतवत्। तथा च कालिदास:,—"रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम्। न कारणात् स्वाद्‌बिभिदे कुमार: प्रवर्तितो दीप इव प्रदीपात्॥" इति।

शिवः, मन्दर इव भोगिभोगाङ्कितः, कैलास इव महेश्वरोपभुक्तकोटिः, मधुरिव नानारामानन्दकरः, क्षीरोदमथनोद्यतमन्दर इव मुखरितभुवनः, रागरज्जुरिवोल्लासितरतिः, ईशानभूतिसञ्चय इव सन्ध्याच्छलितः, शरन्मेघ इवावदातहृदयः विष्णुपदावलम्बी

---

तस्य पुत्रः कन्दर्पकेतुर्नामेति सम्बन्धः। पारिजातो देवद्रुमः, ("पञ्चैते देवतरवो मन्दारः पारिजातकः" इत्यमरः) आश्रितं नन्दनमिन्द्रवनं येन सः, ("नन्दनं वनम्" इतीन्द्रप्रकरणेऽमरः) पक्षे—आश्रितान् नन्दयतीति तादृशः। हिमालयो हिमवान्। जनितोत्पादिता शिवा गौरी येन, ("शिवा भवानी रुद्राणी" इत्यमरः) पक्षे—शिवं सुखं, ("श्वः श्रेयसं शिवं भद्रम्" इत्यमरः) मन्दर इन्द्रकीलः। भोगी सर्पः। भोगः शरीरम्। पक्षे—भोगी सुखी। भोगः स्त्र्यादिसम्भोगः। ("उरगः पन्नगो भोगी"। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः।" इति उभयत्राप्यमरः) कैलासः पर्वतः। महेश्वरः शिवः। कोटिरग्रम्। ("कोटिरग्रे प्रकर्षे च" इति धरणिः। "रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः" इति हैमः। "शिवः शूली महेश्वरः" इत्यमरः) पक्षे—महेश्वरैर्धनाढ्यैरुपभुक्ताः कोटयस्तत्सङ्ख्याकानि धनानि यस्य सः। ("कोटिः स्त्री धनुषोऽग्रे स्यात् सङ्ख्याभेदप्रकर्षयोः" इति विश्वः) मधुर्वसन्तः। नाना आरामा अनेकोपवनानि तेषामानन्दकर्ता। ("आरामः स्यादुपवनं कृत्रिमं वनमेव यत्" इत्यमरः। "अथ पुष्परसे मधु। दैत्ये चैत्रे वसन्ते च मधुः" इति विश्वः) पक्षे रामाः स्त्रियः। ("सुन्दरी रमणी रामा" इत्यमरः) क्षीरोदः क्षीरसमुद्रः। ["उदकस्योदः संज्ञायाम्" इत्युदकस्योदादेशः] ("रत्नाकरो जलनिधिर्यादसां पतिरप्पतिः। तस्य प्रभेदाः क्षीरोदो लवणोदस्तथाऽपरे॥" इत्यमरः) मन्दरो मन्थाचलः। मुखरितं शब्दायमानं भुवनं जलं येन। ("पयः कीलालममृतं जीवनं भुवनं वनम्" इत्यमरः। "इन्द्रकीलस्तु मन्दरः" इति हेमचन्द्रः) पक्षे—भुवनं जगत्। ("विष्टपं भुवनं जगत्" इत्यमरः) अस्मिन् पक्षे जयशब्दघोषणयेति शेषः। रागरज्जुः कामः। ("कन्दर्पो दर्पकः कामः शिखिस्त्वनुर्जगावहः। सर्वधर्ममनोहारो रागरज्जुः प्रकीर्तितः॥" इत्युत्पलिनी) रतिः कामस्त्री। पक्षे—रतिरनुरागः। ईशानः शिवः। ("शर्व ईशानः शङ्करः" इत्यमरः) भूतिर्भस्म। ("भूतिर्भस्मनि सम्पदि" इत्यमरः) सन्ध्यासूच्छलितः। पक्षे—सम्यग्ध्यायतीति सन्ध्यः। ["आतश्चोपसर्गे" इति कः] सन्ध्यः सन्ध्याविचारकर्ता, अत एवाच्छलितः केनापि

च, पार्थ इव समरसाहसोचितः, कंस इव कुवलयापीडभूषितः, तार्क्ष्य इव विनताऽऽनन्दकरः सुमुखनन्दनश्च, विष्णुरिव क्रोडी-कृततनुः, शान्तनव इव स्ववशस्थापितकालधर्मः, कौरव-व्यूह इव सुशर्माधिष्ठितः, सुबाहुरपि रामानन्दः, समदृष्टि-

---

हुलितुमशक्यः। ["तदस्य सञ्जातम्" इति कुलशब्दादितच्] शरत्कालिकमेघ इवावदातहृदयः जलसम्बन्धप्रतिभासमानैस्त्वरहितान्तःप्रदेशः। विष्णुपदावलम्बी आकाशावलम्बी। ("वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी" इत्यमरः) पक्षे—अवदातहृदयः शुद्धान्तःकरणः। ("हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः) [दैप् शोधने इत्यस्मात् क्तः, "आदेचः" इत्यात्वम्] विष्णुपदं हरिचरणम्। पार्थोऽर्जुनः। समरे सङ्ग्रामे साहसं तत्रोचितो योग्यः। पक्षद्वयेऽपि समोऽर्थः। यद्वा—रसोऽनुरागः, हासः स्मितम्, [चाङ्गीवदर्थे] समाभ्यां सर्वजनतुल्याभ्यां रसहासाभ्यामुचितो योग्यः. धर्मराज इव समवर्त्त्यर्थः। ("धर्मो यमः। हासो हास्यं च" इत्यमरः) कंसस्तन्नामा दैत्यः। कुवलयापीडस्तद्धस्ती। पक्षे—कोः पृथिव्याः वलय इवापीड इव कुवलयापीडः पृथ्वीमण्डनायमान इति यावत्, तादृशेन भूषितः। "यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो भासो हासः कविकुलगुरुः कालिदासो विलासः। हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः केषां नैषा कथय कविता-कामिनी कौतुकाय॥" इतिवत्। ("कटको वलयोऽस्त्रियाम्।" "शिखास्वापीड-शेखरौ" इत्युभयत्राप्यमरः) तार्क्ष्यो गरुडः। विनता तन्माता तदानन्दकरः। ("गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः" इत्यमरः) पक्षे—विनतानां नम्राणामानन्दकरः। सुमुखाः पण्डितास्तेषां हर्षकर्त्ता। पक्षे—सुमुखो गरुडपुत्रः स नन्दनः पुत्रो यस्य सः। विष्णुरिव क्रोडीकृता शूकरीकृता शोभना तनुः शरीरं येन सः। (पुंस: क्रोडशब्दः। "क्रोडः शूकरभागयोः" इति विश्वप्रकाशः। "स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः) पक्षे—क्रोडीकृतोऽङ्कीकृता सुतनुर्येन सः। [आशीभवत तादर्थ्यात् ताच्छब्द्यम्] ("उत्सङ्गशूकरौ क्रोडः" इति पादशेषाधिकारेऽनेकार्थध्वनिमञ्जरी) यद्वा—क्रोडीकृता आलिङ्गिता सुतनुर्येन सः। ("आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम्। अङ्कपालिः परीरम्भः क्रोडीकृतिः" इति हेमः) शान्तनवो भीष्मस्तद्वत् स्ववशे स्थापितः कालधर्मो मृत्युर्येन सः। ("स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः" इत्यमरः) पक्षे—कालस्य धर्मः; तथाच व्यासः,—"कालो वा कारणं राज्ञो

इव महेश्वरः, मुक्तामयोऽप्यतरलमध्यः, जलद इव विमल-तरवारिधाराशासितराजहंसः, वंशप्रदीपोऽप्यचलदशस्तनयः कन्दर्पकेतुर्नाम ।

येन च चन्द्रेणेव सकलकलाकुलगृहेण, शर्वरीतिहारिणा,

---

राजा वा कालकारणम्। इति ते संशयो मा भूद्राजा कालस्य कारणम्॥ राजा धर्मस्य कारणम्" इति स्मृतिः। कौरवव्यूहे सुशर्मा नाम योद्धा। पक्षे—सुशर्मणा अतिसुखिनाऽधिष्ठितः। ("शर्मशातसुखानि च" इत्यमरः) पुनर्विरोधाभासेनाह—सुबाहुरन्नामको राक्षसः। रामो दाशरथिः। सुबाहुराक्षसस्य रामानन्दकर्तृत्वं विरोधः। तत्राविनाशोऽपाततो विरोधः, पक्षान्तरेण परिहारः। सुबाहुः शोभनभुजः। रामाः स्त्रिय आनन्दयतीति तच्छील इति परिहारः। ("भुजबाहू प्रवेष्टो दोः"। "सुन्दरी रमणी रामा" इत्युभयत्राप्यमरः) समदृष्टिः अविषमदृष्टिः। महेश्वरः शिवः। ("शिवः शूली महेश्वरः" इत्यमरः) शिवः समदृष्टिरिति विरोधः। पक्षे—समदृष्टिः सर्वजनेषु समानदर्शनः, महेश्वरो महाराजः। ("स्वामी त्वीश्वरः पतिरीशिता" इत्यमरः) मुक्तामयो मौक्तिकप्रचुरः। ["तत्प्रकृतवचने" इति मयट्] अतरलमध्यः तरलो हारमध्यमणिस्तद्रहितो मध्यो यस्य सः; हारस्यातरलमध्यता विरोधः। ("तरलो हारमध्यगः" इत्यमरः) अत्र मध्यशब्दप्रयोगस्तु "वंश्यो निवापाञ्जलयः पितॄणाम्" इत्यादिवद्बोध्यः। वस्तुतस्तु मध्यशब्दरहितः पाठः। पक्षे—मुक्तामयो नीरोगः। अतरलो धीर इति परिहारः; पराङ्गनासु पराङ्मुख इत्यर्थः। ("रोगव्याधिगदामयाः"। "चञ्चलं तरलं चैव" इत्युभयत्राप्यमरः) जलद इव। विमलतरया अतिस्वच्छया वारिधारया शासिता राजहंसा येन सः। ("राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः। उपलक्षणे तृतीया) पक्षे—विमलस्तरवारिः खड्गस्तदीयधारया शासिता राजान एव हंसा येन सः। ("करवाल-निस्त्रिंशकृपाणखड्गास्तरवारिकौक्षेयकमण्डलाग्राः" इति हेमः। "खड्गादीनां च निशित-मुखे धारा प्रकीर्तिता" इति विश्वः) वंशप्रदीपः वंशे वेणौ प्रदीपः आकाश-दीपः। अचला अदग्धा दशा वर्तिर्यस्य तादृशः, दीपस्यादग्धवर्तिता विरोधः। पक्षे—वंशप्रदीपः कुलदीपः। अचला अनष्टा दशा अवस्था यस्य तादृशः। ("दशा वर्तिदशा वयः" इति हारावली। "द्वौ वंशौ कुलमस्करौ"। "दशाऽवस्थाऽनेकविधा" इत्युभयत्राप्यमरः।

दलितकैरवेण, कुमुदवनबन्धुना, प्रसाधिताशेन विलोकिताः, जलधय इवोच्छ्वसितगोत्राः, सुदूरविवर्द्धितजीवनाः, प्रसन्नसत्त्वाः सन्तः परां वृद्धिमवापुः ।

यस्य च जनितानिरुद्धलीलस्य, रतिप्रियस्य, कुसुमशरासनस्य मकरकेतोरिव दर्शनेन वनिताजनस्य हृदयमुल्ललास ।

यस्मै चानुगतदाक्षिण्यसदागतये, श्रुतिसुखदकोमलकोकिल-

---

श्लेषेणाह—येन कन्दर्पकेतुना चन्द्रेणेव सकलकलाकुलगृहेण। पुनरुक्तोऽयं श्लेषः। शर्वरीतिरस्कारिणा शर्वर्यां रात्रौ तिरस्कृतिर्दुःखदत्वात् तमस्कारिणा तन्नाशकेन। दलितकैरवेण विकासितकुमुदेन। प्रसाधिता अलङ्कृता आशा दिशो येन तादृशेन। विलोकिता दृष्टाः। जलधय इव समुद्रा इवोच्छ्वसितगोत्रा उच्छ्वसितपर्वताः, सुदूरविवर्द्धितजीवना दूरप्रवृद्धजलाः, प्रसन्नसत्त्वाः प्रसन्नजन्तवः सन्तः परामुत्कृष्टां वृद्धिमवापुः। ("सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे" इति वैजयन्ती। "अथ शर्वरी निशा निशीथिनी रात्रिः"। "प्रसाधितोऽलङ्कृतश्च"। "आशाश्च हरितश्च ताः"। "सिते कुमुदकैरवे"। "अद्रिगोत्रगिरिग्रावा"। "जीवनं भुवनं वनम्"। "कबन्धमुदकं पाथः" इति सर्वत्रामरः) पक्षान्तरे—शर्वस्य शिवस्य रीतिः सम्प्रदायस्तेन हारी मनोहरस्तेन। दलितानि नाशितानि कैरवाणि शत्रवो येन। प्रकर्षेण साधिता आशा अर्थिनामभिलाषो येन। [साध संसिद्धौ] उच्छ्वसितगोत्राः प्रसिद्धवंशाः, सुदूरमायतं विशेषेण वर्द्धितं जीवन्त्यनेनेति जीवनं जीविका येषां तादृशाः, प्रसन्नसत्त्वाः प्रसन्नस्वभावाः, सन्तः कोविदाः। ("कैरवी चन्द्रिका प्रोक्ता कैरवं कुमुदे रिपौ"। "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः॥" इत्युभयत्रापि विश्वः। "सन् सुधीः कोविदो बुधः" इत्यमरः)।

यस्य कन्दर्पकेतोर्जनितोत्पादिता अनिरुद्धस्योषापतेर्लीला विलासो येन तस्य, दर्शनेन वनिताजनस्य हृदयमुल्लासोल्लासं प्राप्तम्। ("अनिरुद्ध उषापतिः"। "लीला विलासक्रिययोः" इत्युभयत्राप्यमरः) पक्षे—जनितानिरुद्धलीलस्योत्पादितानिवारितविलासस्य। रतिप्रियस्य अनुरागवल्लभस्य। कुसुमशरं काममस्यति क्षिपति अतिसुन्दरत्वात् तादृशस्य। [असु क्षेपणे] ("स्त्रीणां विलासबिब्बोक-विभ्रमा ललितं तथा। हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः॥" इत्यमरः)।

श्लेषोपमासङ्करेणाह—वक्ष्यमाणेन यस्मै तरुणाः स्पृहयाञ्चक्रुरिति सम्बन्धः।

रुताय, विकासितपल्लवाय, कृतकान्तारतरङ्गाय, सुरभिसुमनोऽभिरामाय, सर्वजनसुलभपद्माय, विस्तारितकनकसम्पदे, अतिक्रान्तदमनकाय वसन्तायेव, वनलता इवोत्कलिकासहस्रसङ्कुलाः, भ्रमरसङ्गताः, प्रवालहारिण्यः, विलसद्वयसस्तरुण्यः स्पृहयाञ्चक्रुः।

["स्पृहेरीप्सितः" इति सम्प्रदानसंज्ञा] अनुगतो दक्षिणसदागतिर्दक्षिणमारुतो यं तस्मै। श्रुतिसुखः कोमलः कोकिलकृतं पिकशब्दो यत्र तस्मै। कृतः कान्तारस्य काननस्य तरङ्गः कम्पनं येन तादृशाय। विकासिताः पल्लवाः किसलयानि येन तादृशाय। सर्वजनानां सुलभं पद्मं यत्र तादृशाय। विस्तारिता कनकस्य धुस्तूरस्य चम्पकस्य वा सम्पत् येन तादृशाय, अत एव सुरभयः सुगन्धयः सुमनसः पुष्पाणि ताभिरभिरामाय सुन्दराय। अतिक्रान्तो दमनकः पुष्पविशेषो येन तथाभूताय; शिशिरजत्वात् तस्यातिक्रम इति भावः। वनलता इवोत्कलिकानां सहस्रेणोद्गतकोरक-सहस्रेण सङ्कुला व्याप्ताः। भ्रमरैर्मधुपैः सङ्गताः। प्रवालेन नवपल्लवेन हारिण्यो मनोहराः। विलसद्वयसो [illegible]। ("वायुर्मातरिश्वा सदागतिः"। "श्रुतिः स्त्री श्रवणं श्रवः"। "कोकिलः पिक इत्यपि"। "तिरश्चां वाशितं रुतम्"। "पल्लवोऽस्त्री किसलयम्"। "वा पुंसि पद्मं नलिनम्"। "धुस्तूरः कनकाह्वयः"। "सुरभिर्घ्राणतर्पणः"। "इष्टगन्धः सुगन्धिः स्यात्"। "स्त्रियः सुमनसः पुष्पम्"। "कलिका कोरकः पुमान्"। "षट्पदभ्रमरालयः"। "प्रवालमङ्कुरोऽप्यस्त्री"। "[illegible]" इति चतुर्दशस्वप्यमरः। "कान्तारः कानने विधौ"। "कनकं चम्पके हेम्नि धुस्तूरेऽपि निगद्यते"। इत्युभयत्रापि विश्वः। "दमनो वीरपुष्पयोः" इति धरणिः। पक्षे—अनुगतानां दक्षिणानां सुदाराणां सदा सर्वदा गतिरागमनं तस्मै। [तादर्थ्ये चतुर्थी] यद्वा—अनुगताः सेवकाः दक्षिणा व्यवहारकुशलाः सन्तश्च तेषामागतिरा साकल्येन गतिर्निर्वाहो यस्मात्, विविधस्यापि जनस्य पालनकर्त्तेत्यर्थः। श्रुतिसुखं कोमलं कोकिलवत् रुतं शब्दो यस्य तस्मै। [रु शब्दे क्त.] कृतः कान्तानां स्त्रीणां रतरङ्गः सुरतरङ्गो येन तस्मै, अत एव विकासितः पल्लवः शृङ्गारो येन तादृशाय, अत एव सुरभिसुमनांसि सुगन्धिपुष्पैरभिरामाय। यद्वा—सुरभयः ख्याताः सुमनसः पण्डितास्तैः। सर्वजनानां सुलभा पद्मा लक्ष्मीर्यस्य तादृशाय। विस्तारिता कनकस्य सुवर्णस्य सम्पत् येन तादृशाय। अतिक्रान्ता दमनका वीरा येन तस्मै। यद्वा—दमयतीति दमनः शत्रुः। उत्कलिका उत्कण्ठास्तासां

यस्य च समरभुवि भुजदण्डेन कोदण्डं, कोदण्डेन शराः, शरैररिशिरः, तेनापि भूमण्डलं, तेन चाननुभूतपूर्वो नायकः, नायकेन कीर्त्तिः, कीर्त्या च सप्त सागराः, सागरैः कृतयुगादिराजचरितस्मरणम्, अनेन च स्थैर्य्यम्, अमुना च प्रतिक्षणमाश्चर्य्यमासादितम्।

यस्य च प्रतापानलदग्धानां रिपुसुन्दरीणां करतलताड़नभीतैरिव मुक्ताहारैः पयोधरपरिसरो मुक्तः।

यस्य च निशितनाराचजर्ज्जरितमत्तमातङ्गकुम्भस्थल-

---

षट्पदैश्च सङ्कुलाः। भमरैः कामुकैर्ललाटालकैर्वा सङ्कुलाः। प्रवालो विद्रुमः, हारो मुक्तावली, तौ स्तो यासां ताः। यद्वा—प्रकृष्टा बालाः केशास्तैर्हारिण्यो मनोहराः। विलसद्वयो यौवनं यासां ताः। ("दक्षिणे सरलोदारौ"। "त्रैयमं त्रिभुवनं रतम्"। "लक्ष्मीः पद्मालया पद्मा"। "स्वर्णं सुवर्णं कनकम्"। "उत्कण्ठोत्कलिके समे"। "अथ विद्रुमः पुंसि प्रवालः पुंनपुंसकम्"। "चिकुरः कुन्तलो बालः"। "हारो मुक्तावली" इत्युभयत्राप्यमरः। "पल्लवः स्यात् किसलये विटपविस्तारयोरपि"। "सुरभिः सौरभे ख्याते वसन्ते पण्डितेऽपि च"। "भमरः कामुके भृङ्ग-ललाटालकयोरपि" इति त्रिष्वपि विश्वः। "वयो बाल्यादि पक्षी च यौवनं च क्वचिद्वयः" इति शाश्वतः)।

मालादीपकेनाह—यस्य कन्दर्पकेतोः समरभुवि रणाङ्गणे भुजदण्डेन कोदण्डं धनुः समासादितम्। अत्र यथायथं लिङ्गव्यत्ययो वचनव्यत्ययश्च। ("शरासनकोदण्डकार्मुकम्" इत्यमरः) पूर्वं नानुभूतोऽननुभूतपूर्वस्तादृशो नायकः कन्दर्पकेतुः। कृतयुगादिराजानां प्रियव्रतसगरादीनां चरितं स्वेनैव तेजसा लोकप्रकाशनादि तत्स्मरणम्, अनेन कारणेन स्थैर्य्यम्, अमुना स्थैर्य्येणाश्चर्य्यं, कारणस्याशुविनाशित्वात्। "मालादीपकमाद्यं चेत् यथोत्तरगुणावहम्"।

यस्य कन्दर्पकेतोः प्रतापानलदग्धानां रिपुसुन्दरीणां करतलेन ताडनं पत्युर्मरणोत्तरमुरस्ताडनं तेन भीतैरिव मुक्ताहारैः पयोधरपरिसरो मुक्तः। उत्प्रेक्षालङ्कारः। "सम्भावना स्यादुत्प्रेक्षा" इति लक्षणात्। ("पर्यन्तभूः परिसरः" इत्यमरः)।

यस्य कन्दर्पकेतोः समर एव सागरस्तस्मिन् खड्गो रराजेत्यन्वयः। निशितनाराचैस्तीक्ष्णबाणैर्जर्जरितानि शिथिलावयवानि यानि मत्तमातङ्गकुम्भस्थलानि

विगलित-मुक्ताफलनिकरदन्तुरितपरिसरे, पतत्पत्ररथे, रक्तवारि-सञ्चरदनेकच्छायोत्पलपुण्डरीकवाहिनीग्रतसमाकुले, नृत्यत्कबन्धे, सुरसुन्दरीसमागमोत्सुकचारुभटाहङ्कारसम्भारभीषणे समरसागरे भिन्नपदातिकरितुरगरुधिरार्द्रे जयलक्ष्मीपादालक्तकरागरञ्जित इव खड्गो रराज।

अथ कदाचिदवसन्नायां यामवत्यां दधिधवले कालक्षपणक-ग्रासपिण्ड इव, निशायमुनाफेनपुञ्ज इव, मेनकानखमार्जन-

---

तेभ्यो विगलितैः स्रस्तैर्मुक्ताफलनिकरैर्दन्तुरितो दन्तुरवदाचरितः परिसरो यस्य तस्मिन्। [दन्त उन्नत उरच्। उन्नता दन्ता अस्य दन्तुरः, तस्मादाचारे क्विप्, क्तः इट्] यद्वा—दन्तुरं विषमोन्नतं तद्वदाचरितम्। ("दन्तुरं वाच्यवदुद्दन्तुरे विषमोन्नते" इति विश्वप्रकाशः) पतत्पत्ररथे पतत्पक्षिणि। रक्तमेव वारि जलं तत्र सञ्चरदनेकच्छायमनेककान्ति उद्गतं पलं मांसं यस्मात् उत्पलं मांसशून्यं तच्च पुण्डरीकं सितच्छत्रं च यत्र तादृशं यद्वाहिनीग्रतं सेनाग्रं तेन समाकुले। नृत्यत्कबन्धे नृत्यच्छिन्नमस्तकशरीरे। सुरसुन्दरीणामप्सरसां समागमोत्सुकानां चारुभटानां योधानामहङ्कारोऽहन्तामित्यस्य सम्भारस्तेन भीषणे। वषट्कार इति निर्देशात् समुदायादपि कारः। यद्वा—अहङ्कारस्य गर्वस्य सम्भारेण भीषणे। ("भटा योधाश्च योद्धारः" । "कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्" इति द्वयोरप्यमरः। "तरङ्गिणी च सेनायां वाहिनी परिकीर्तिता" इति विश्वः। "उत्पलं कुवलये। इन्दीवरे मांसशून्ये" इति हैमः। "पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे" इति विश्वप्रकाशः। "पत्ररथो बाणपक्षे" इति धरणिः) पक्षे—पत्ररथः पक्षी। उत्पलमिन्दीवरम्। पुण्डरीकं सिताम्भोजम्। कबन्धं जलम्। वाहिनी नदी। ("कबन्धमुदकं पाथः" इत्यमरः) सुरसुन्दरो मत्स्यभेदः चारुभटोऽपि। छेकानुप्रासाप्युपमाश्लेषरूपकोत्प्रेक्षालङ्काराणां यथासम्भवं सङ्करसंसृष्टी। ओजो गुणः। वैदर्भी रीतिः।

अथानन्तरं, स इति शेषः। कन्दर्पकेतु कदाचिदवसन्नायां समाप्तायां रजन्या-मष्टादशवर्षदेशीयाम् ["ईषदसमाप्तौ कल्पब्देश्यदेशीयर्" इति देशीयः] ईषद-समाप्ताष्टादशवर्षां कन्यां स्वप्नेऽपश्यदित्यन्वयः। अवसन्नायामित्यनेन स्वप्नस्य सत्य-फलदत्वं ध्वनितम्; तदुक्तं गुरुणा—"अरुणोदयवेलायां दशाहेन फलं भवेत्" इति;

शिलाशकले इव, मधुच्छत्रच्छायमण्डलोदरे, पश्चिमाचलोपधानसुखनिलीनशिरसो राजतताटङ्के इव, शेषमधुभाजि चषके इव विभावरीवध्वाः, अपरजलधिपयसि शङ्खकान्तिकामुके मज्जति कुमुदिनीनायके, शिशिरकर्दमितकुमुदधूलिमध्यबद्धचरणेषु षट्चरणेषु, कलप्रलापबोधितचकिताभिसारिकासु सारिकासु, प्रबुद्धाध्ययनकर्मठेषु मठेषु, विभासरागमुखरकार्पटिकजनोपगीयमानकाव्यकथासु रथ्यासु, सकलनिपीतनिशातिमिरमति-

---

एतादृशे कुमुदिनीनायके चन्द्रेऽपरजलधिपयसि पश्चिमसमुद्रजले मज्जति सतीत्यन्वयः। काल एव चारणस्तस्य दधिधवले ग्रासपिण्डे इव; चारणकस्य भक्षणार्थं दधिधवलः पिण्डो दीयते इति प्रसिद्धम्। निशा रात्रिः सैव यमुना तस्याः फेनपुञ्ज इव। मीनकाननक्षालनार्थं शिलाशकले "झांवां" इति भाषायाम्। मधुच्छत्रस्य छाया मधुच्छत्रच्छायं ("विभाषा सेना—" इति क्लीबत्वम्) तदेव मण्डलोदरं मण्डलमध्यो यस्य तस्मिन्। पश्चिमाचलोऽस्ताद्रिः, स एवोपधानं शिरोऽवलम्बनं, तत्र सुखेन निलीनं स्थितं शिरो यस्यास्तस्या विभावरीवध्वा रात्रिस्त्रिया राजतताटङ्के इव रौप्यकर्णभूषणविशेषे इव "ढेंढी" इति भाषायाम्। तस्या एव शेषमधुभाजि पीतशेषमद्यसहिते चषके पानपात्रे इव। शङ्खकान्तेः कामुकेऽभिलाषुके तुल्ये इव। ("चषकोऽस्त्री पानपात्रम्"। "उपधानं तूपबर्हः"। "कामुके कमितानुकः" इत्यमरस्त्रिष्वपि) उत्प्रेक्षालङ्कारः। शिशिरेण तुषारेण कर्दमितः कर्दमवदाचरितः कुमुदधूलिसमूहस्तन्मध्ये बद्धाश्चरणा येषां तादृशेषु षट्चरणेषु भ्रमरेषु। ("शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽपि च" इति विश्वप्रकाशः। "षट्पदभ्रमरालयः" इत्यमरः) कलप्रलापोऽव्यक्तमधुरध्वनिस्तेन बोधिता अत एव चकिता अभिसारिका याभिस्तासु सारिकासु। ("कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इत्यमरः) सारिका मदनशलाकादिर्दन्त्यादिश्च, तदुक्तमूष्मभेदे—"स्त्रीलिङ्गोऽयं शारिः शकुनिविशेषे तु दन्त्यतालव्यः" इति। प्रबुद्धा अध्ययनकर्मठा अध्ययनशीला येषु तादृशेषु मठेषु छात्रादिनिलयेषु। ["कर्मणि घटोऽठच्" इत्यठच्प्रत्ययः] ("कर्मशूरस्तु कर्मठः"। "मठश्छात्रादिनिलयः" इति द्वयोरमरः) विभासरागेण रागविशेषेण मुखराः कार्पटिकजनैर्वंशगायकभिक्षुभिः, "कपड़िया" इति भाषाप्रसिद्धैरुपगीयमाना

तनीयस्तया वोढुमसमर्थेष्विव, कज्जलव्याजाद्वमत्स्विव, कामिमिथुननिधुवनलीलादर्शनार्थमिवोद्ग्रीविकाशतदानखिन्नेषु, विविधबन्धरतक्रीडासाक्षिषु, शरणागतमिवाधोलीनं तिमिरमवत्सु, दुर्जनेष्विव दग्धस्नेहतया मन्दिमानमुपगतेषु, अतिवृद्धेष्विव दशाऽन्तमुपगतेषु, विरक्तमदीश्वरेष्विव पात्रमात्रावशेषेषु, दानवेष्विव निशाऽन्तमध्यचारिषु, अस्ताचलशिखरेष्विव पत-

---

काव्यकथा यासु तादृशीषु रथ्यासु प्रतोलीषु। नानेऽनतिपाटवं ध्वनयितुं मुखरशब्द-प्रयोगः। ("रथ्या प्रतोली विशिखा" इत्यमरः) यमकालङ्कारः। प्रदीपेष्वित्यग्रिमेषु सर्वत्रान्वयः। अतितनीयस्तया अतिकृशत्वेन सकलनिशीथं निशाकाले तद्वोढुम्, असमर्थेष्विव। निधुवनलीला सुरतक्रीडा। ("मैथुनं निधुवनं रतम्" इत्यमरः) उद्ग्रीविका ग्रीवोन्नमनक्रिया, तस्याः शतं, तद्दानं विधानम्। विविधबन्धो मयूरादिबन्धो यत्र तादृशरतक्रीडानां साक्षिषु साक्षाद्द्रष्टृषु। शरणागतमिवाधोलीनम् अधःस्थितं तिमिरमन्धकारमवत्सु रक्षत्सु। तथा च वराहः,—"नासौ न भीता न वृथानताय विमुक्तशस्त्रा विरलायमाना। भीतायुधा चाऽऽगततावकीर्णा हन्ति न वध्या न च पीडनीयाः॥ कृतैकतनुः शरणागता वा कृताञ्जलिर्यश्च वदेन्न तवाऽस्मि॥" इति। उत्तरत्र वध्या इत्यादौ वचनविपरिणामः। ("शरणं गृहरक्षित्रोः"। "तमिस्रं तिमिरं तमः" इतिद्वयोरप्यमरः) उत्प्रेक्षालङ्कारः। दुर्जनेष्विव दग्धस्नेहतया नष्टप्रेमत्वेन, मन्दिमानं सुहृत्कर्मणि शिथिलताम्। ("स्नेहोऽनुरागश्चेकस्य तैलेऽपि च निगद्यते" इति धरणिः) पक्षे—स्नेहस्तैलम्। मन्दिमानमल्पतेजस्त्वम्। अतिवृद्धेष्विव दशाऽन्तं वयसोऽन्तमुपगतेषु। पक्षे—दशाऽन्तं वर्तिकाऽन्तम्। ("दशा वर्तिदशा वयः" इति हारावली) विरक्तमदीश्वरेष्विव सर्वस्वदानादिना प्रासादाद्भ्रष्टेष्विव; एतच्च सत्पदेन ध्वनितम्; पात्रमात्रावशेषेषु देहमात्रावशिष्टेषु। तथा च कालिदासः,—"शरीरमात्रेण नरेन्द्र! तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः। आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः॥" इति। ("पात्रं तु भाजने योग्ये देहे तीरद्वयान्तरे" इति मेदिनी) यथा—पात्रममात्यः। ("पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते" इति विश्वप्रकाशः) पक्षे—पात्रं भाजनम्। दानवेष्विव निशा रात्रिचर्या एतन्मध्यचारिषु। पक्षे—निशाऽन्तं गृहं तन्मध्यचारिषु। ("निशा"

त्पतङ्गेषु प्रदीपेषु, अनवरतमकरन्दबिन्दुसन्दोहलुब्धमधुकरनिकुरम्बझङ्कारमुखरितेषु, म्लानिमानमुपगच्छत्सु वासागारकुसुमोपहारेषु, विगलत्कुन्दैरलकैः प्रियविरहशोकाद्बाष्पबिन्दूनिवोत्सृजतीषु, प्रियतमगमननिषेधमिव कुर्वतीषु वाचालतुलाकोटिभिश्चरणपल्लवैः, रजनिशेषसुरतभरपरिश्रमविगलितकेशपाशदरदलितमालतीमालापरिमललुब्धमधुकरनिकरपक्षानिलनिपीतनिदाघजलशीकरासु, उद्वेलद्भुजवल्लिकङ्कणझणत्कारमुखरासु, नवनखपदसंसक्तकेशनिर्मोकवेदनाकृतशीत्कारविनि-

ऽस्तमयमदनम्" इत्यमरः) अस्ताद्रिशिखरेष्विव। पतङ्गः सूर्यः। पक्षे — पतङ्गाः शलभाः। ("पतङ्गः शलभादित्यौ" इति विश्वः। "अस्तस्तु चरमः क्ष्माभृत्" इत्यमरः) एतादृशेषु वासागारकुसुमोपहारेष्वित्यन्वयः। अनवरतं मकरन्दबिन्दुसन्दोहः पुष्परससमूहस्तत्र लुब्धमधुकराणामभिलाषुकभ्रमराणां निकुरम्बं यूथं तस्य झङ्कारैव रवविशेषैरेव मुखरितेषु शब्दायमानेषु। ("सन्दोहविसरव्रजाः"। "लुब्धोऽभिलाषुकस्तृष्णक्"। "निकुरम्बं कदम्बकम्" इति विश्वश्चामरः) एतादृशेषु प्रियतमास्वित्यन्वयः। विगलत्कुन्दैः पतत्कुन्दकुसुमैरलकैः। [करणे तृतीया] प्रियविरहेण भाविप्रियविरहेण शोकस्तस्माद्बाष्पबिन्दूनिवोत्सृजतीषु, अनेन वृष्टिर्ध्वनिता; अत एव प्रियगमननिषेधमिव कुर्वतीषु। तदाह नारदः,—"अकालजेषु वृष्टिविद्युद्गर्जितवृष्टिषु। उत्पातेषु विविधेषु प्रयाणं तु न व्रजेत॥" इति। प्रवत्स्यत्पतिका नायिका। ("प्रवत्स्यति प्रियतमे प्रवत्स्यत्पतिकेष्यते" इति रसरत्नहारः) अनयोरप्यनयोः सङ्करः। वाचाला मुखरास्तुलाकोटयो येषु तादृशैश्चरणपल्लवैरुपलक्षितासु। [उपलक्षणे तृतीया] खनितमनेन ध्वनितम्। ("स्याज्जल्पाकस्तु वाचालः"। "पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्" इति द्वयोरप्यमरः) रजनिशेषः पश्चिमकालस्तत्र सुरतभरस्तेन परिश्रमस्तेन विगलितः केशपाशः केशकलापस्तत्र दरदलिताऽऽमोदविकसितानां मालतीनां मालास्तासां परिमलो जनमनोहरो गन्धस्तत्र लुब्धमधुकरनिकरपक्षानिलेन निपीताः शोषिता निदाघजलशीकरा घर्मकणा यासां तासु; पद्मिन्यः स्त्रिय इमाः। यत्—"वमति मैथुनं निद्रा मद्यः प्राणहराणि षट्" इति, तदविनयादिविषयम्। ("पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे"। "ईषदर्थे दराऽव्ययम्"। "विमर्दोत्थे परिमलो गन्धे जनमनोहरे"। "स्त्रीमोघनिकरव्रात:"

र्गतदुग्धमुग्धदशनकिरणच्छटाधवलितभोगावासासु. पुनर्दर्शन-
मूर्च्छाविधुरसखीजनान्वेषणवीक्ष्यमाणप्रियतमासु. क्षणदागत-
वैयात्यवचनशतस्मारकगृहशुकचाटुव्याहृतिक्षणजनितमन्दाक्षासु,
शरद्दासरलक्ष्मीष्विव न-खालङ्कृतपयोधरासु. आसन्नमरणास्विव
जीवितेशपराङ्मुखीषु. वसन्तवनराजिष्विवोत्कलिकाबहुलासु,
प्रियैरालिङ्ग्यमानासु कामिनीषु: आन्दोलितकुसुमकेसरे, केशरेणु-
मुषि रणितमधुरमणीनां रमणीनां, विकचकुमुदाकरे मुदाकरे
सङ्गभाजि, प्रियविरहितासु रहितासु सुखेन सुमेरामिव वर्षति,

---

इति चतुर्थ्यमरः) चुम्बनाङ्कनखक्षतखण्डनस्य सीत्कारः शिञ्जितं तेन मुखरासु. अनेनापि क्वणितं ध्वनितम्। नवनखपदं रतिविज्ञातं नखक्षतं तत्र संलग्न केशस्त्रि-र्गतो निर्मोचनं तेन वेदना तया कृतः शीत्कारस्तस्मादिनिर्गताभिर्दुग्धमुग्धदशनकिरणच्छटाभिर्धवलितौ धवलीकृतौ भोगावासौ वासगृहं याभिस्तासु. दशनांकरणच्छटाभिस्तिरोहिता। ("मुग्धो बर्बरसुन्दरो" इति विश्वः। "भोगावासो वासगृहम्" इति हारावली) प्रियतमाः प्रेयांसः। क्षणं कामोत्सवं ददातीति क्षणदा रात्रिस्तद्गतं वैयात्यवचनशतं धृष्टतावचनानि तत्स्मारकगृहशुकस्य चाटुव्याहृतिभिः क्षणं क्षणमात्रं जनितं मन्दाक्षं लज्जा यासां तादृशीषु। तथा च माघ.—"क्षणदा भूषणं पुंसः क्षमा लज्जेव योषितः। पराक्रमः परिभवे वैयात्यं सुरतेष्विव॥" इति। ("चटु चाटु प्रिये वाक्ये"। "वैयात्यं धृष्टता मता" इति हारावली। "कलाविशेषोत्सवयोः क्षणः"। "मन्दाक्षं ह्रीस्त्रपा व्रीडा"। "व्याहार उक्तिर्लपितम्" इति चाप्यमरः) शरच्छरदृतुः। न खेनाकाशेनालङ्कृताः पयोधरा मेघा यासु; "मण्डनं मण्डनानाम्" इतिवदाकाशभूषणानामाकाशस्यैव भूषणत्ववर्णनम्। यद्वा—न खेऽलङ्कृता भूषिताः सजलाः, अतिनीला इति यावत्, तादृशाः पयोधरा मेघा यासु; शरत्काले निर्जलत्वादनलङ्कृतत्वमित्यर्थः। पक्षे—नखेन नखक्षतं लक्ष्यते, तेनालङ्कृताः पयोधराः स्तना यासां तादृशीषु। ("स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः) जीवितेशो यमस्तस्य पुरं संयमनी। पक्षे—जीवितेशः पतिः, तत्पुरं शरीरम्। ("यमे प्यमर्त्ये च जीवितेशो धनागमे"। "पुरं पुरि शरीरे च गुग्गुलौ कथितः पुरः" इत्युभयत्रापि विश्वः) वनराजिर्वनपरम्परा। उत्कलिकोद्गतकोरकः। ("कलिका कोरकः पुमान्" इत्यमरः) पक्षे—उत्कलिकोत्कण्ठा। ("उत्कण्ठोत्कलिके समे"

समन्तादर्पके दर्पकेषुदहनस्य, दूरप्रसारितकोकप्रियतमारुते, मारुते वहति; जघनमदनपुरतोरणेन, मदननगरमहानिधिकनकप्राकारेण, रोमावलीलतालवालेन, जघनचन्द्रमण्डलपरिवेषेण, त्रिभुवनविजयप्रशस्तिरोमावलीकनकपट्टेन, सकलहृदयवन्दिनिवासपरिखावलयेन, जगल्लोचनविहङ्गमालालासकशलाकागुणेनेव मेखलादाम्ना परिवृतजघनस्थलीम्;

---

इत्यमरः) यमकेनाह—एतादृशे मारुते वहतीत्यन्वयः। आन्दोलितकुसुमकेसरे कम्पितपुष्पकिञ्जल्के। रणितेन मधुरा मधवो यासां तादृशीनां रमणीनां केशरेणुमुषि केशपदेन तत्स्थानि पुष्पाणि लक्ष्यन्ते तदपहारके। विकचानि विकसितानि च तानि कुमुदानि च कैरवाणि तेषामाकरे, एतादृशे सरसि सञ्चरति, अत एव कुमुदाकरे दर्पकारके। [ मुदितस्य मातुरिमते ठाप् ] एतेन विशेषणत्रयेण शीतमन्दसुगन्धित्वं ध्वनितम्। प्रियविरहितासु, अत एव सुखेन रहितासु. समन्तात् परितो दर्पकेषुदहनस्य कामबाणाग्नेरर्पके समर्पके. अत एव मुर्मुरमिव तुषाग्निमिव वर्षति। ("मुर्मुरस्तु तुषानलः" इति वैजयन्ती) कोकप्रियतमा चक्रवाकी। केसरे केशरे इत्यत्र श्लेषभङ्गः, भोजराजेनोदाहृतं च—"शालं वहन्तो सुरतापनीयं सालं तमिस्रासुरतापनीयम्। रत्नोरुभोमरसचित्रकूटा लङ्काकलङ्काकलिताद्रिकूटे॥" इत्यत्र शालं सालमिति श्लेषभङ्गयमकमिति वर्णितम्। इदं स्थानमव्यपेतयमकम्। केशरे इति तालव्यमध्यपाठे त्विदमेव यमकप्रमाणम्—"अर्थे सत्यर्थभिन्नानां पदानां सा पुनः श्रुतिः। यमकम्। ("केसरो बकुले सिंह-सटायां पुष्पमध्यगे" इति विश्वः। "किञ्जल्कः केसरोऽस्त्रियाम्"। "रेणुर्द्वयोः स्त्रियां धूलिः"। "मुत्प्रीतिः प्रमदो हर्षः"। "व्याकोशविकचस्फुटाः"। "फुल्लश्चैव विकसिते"। "श्वेते कुमुदकैरवे"। "कन्दर्पो दर्पकोऽनङ्गः"। "पद्मो रोप इषुर्द्वयोः"। "कोकश्चक्रश्चक्रवाकः" इत्यत्राप्यमरः) मेखलादाम्ना काञ्चीदाम्ना परिवृतजघनस्थलीमित्यन्वयः। [ जानपदेति ङीप् ] तोरणेन बहिर्द्वारेण। प्राकारेण वरणेन। आलवालेनाऽऽवालेन। "थाला" इति भाषायाम्। परिवेषेण परिधिना। प्रशस्तिः प्रशस्तिवर्णः, सैव रोमावली, तस्याः कनकपट्टेण कनकनिर्मितेन पट्टेन, [ प्राकपार्थिवादिः ] यथा—ताम्रपत्रवत् कनकपट्टम्। सकलानां हृदयान्येव बन्द्यः प्रग्रहास्तेषां निवासः कारा तत्परिखावलयेन, "खाई" इति भाषायाम्; सर्वेषां हृदयानि तत्रैव निवसन्तीति भावः। जगल्लोचनाति

उन्नतपयोधरभारान्तरितमुखचन्द्रदर्शनाप्राप्तिजनितखेदेनेव, गुरु-नितम्बबिम्बपयोधरकुम्भपीडाजनितायासेनेव, गृहीतहृत्-कलत्रानुशयेनेव, विधातुरतिपीडयतो हस्ताग्रजनितायासेनेव, मम मूर्द्धजयोरियत्प्रमाणयोः स्तनकलशयोः कथं मध्येव निपातो भविष्यतीति चिन्तयेव क्षीणतरतामुपगतेन मध्यभागेनालङ्कृताम्; अनुरागरत्नमयकनककुचकाभ्यां, चूचुकमुद्रासनाथाभ्याम्, अतिगुरुपरिणाहतया पतनभयात् कीलिताभ्यामिव चूचुकच्छलेन गिरिसारेण, सकलावयवनिषिक्तशेषलावण्यपुञ्जा-

---

सुवर्णजननेऽपि तान्येव विहङ्गमाः पक्षिणस्तेषां माला पङ्क्तिस्तस्या लासकस्यलाका-गुणः "कांपा" इति भाषायाम्; सर्वेषां शोभनाकर्षकत्वेन भावः। ("तोरणोऽस्त्री बहिर्द्वारम्"। "प्राकारो वरणः शालः"। "[illegible]"। "परिवेषस्तु परिधिः"। "[illegible]"। "खेयं तु परिखा"। "खगे विहङ्गविहगविहङ्गमविहायसः"। "स्त्रीकट्यां मेखला काञ्ची" इत्यष्टस्वमरः) ["गमेः सुपि वाच्यः" इति खश् "विहायसो विह इति वाच्यं खश् च डिद्वा वाच्यः" इति विहायसो विहादेशे "खित्यनव्ययस्य" इति मुमागमः। खन अवदारणे, "अन्येष्वपि दृश्यते" इति डः। परितः खाता परिखा]। चरप्रचयाऽऽदि—मध्यभागेनालङ्कृतामित्यन्वयः। उन्नतपयोधरभाराभ्यामन्तरितो व्यवहितो यो मुखचन्द्रस्तद्दर्शनाप्राप्त्या जनितखेदेनेव। गुरुर्महान् नितम्बबिम्बो नितम्बमण्डलं पयोधरकुम्भः स्तनकलशस्ताभ्यां पीडया जनितायासेनेव। गृहीतो हृत्कलत्रस्य पृथगविमलकलत्रस्यानुशयो दीर्घद्वेषो येन। विधातुर्ब्रह्मणः। मूर्द्धशब्देनोर्द्धदेशो लक्ष्यते, तथोत्पन्नयोः स्तनकलशयोर्मध्येव निपातो भविष्यतीति चिन्ता क्षीणताहेतुः। ("मध्यमं चावलग्नं च मध्योऽस्त्री"। "कलत्रं श्रोणिभार्ययोः"। "अनुशयो दीर्घद्वेषानुतापयोः" इति विश्वामरः) हृत्कलत्रपदेन युवतीपतिः पीनस्ते वयसि वर्तमानस्य हृत्कान्तोऽपि प्रतीयते। गुरुकलत्रानुशयेनेति पाठस्त्वयुक्तत्वादुपेक्षितः। पयोधराभ्यामुद्रासनाथाभ्यामित्यन्वयः। अनुराग एव रत्नं तन्मयौ कनककञ्चुकौ गुलिकामयौ रत्नमये गुलिके, यतोऽतश्चूचुके एव मुद्रे अतनुमये नानाक्षराङ्किते मुद्रे, ताभ्यां सनाथाभ्यां सहिताभ्याम्। ("कञ्चुको मत्कुणद्वये श्रीवाभरणचन्दनयोः" इति विश्वप्रकाशः। "कनकी गुलिकामणिः") अतिगुरुपरिणाहतया विशालतया पतनभयादेतौ चूचुकच्छलेन मिषेण गिरिसारेण

पक्ष्मलचटुलालसेन, हृदयवासगृहावस्थितहृच्छयविलासिनो गवाक्षशङ्कामुपजनयता, सरागेणापि निर्वाणं कुर्वता, गतिप्रसररोधकश्रवणकृतकोपेनेवोपान्तलोहितेन, धवलयतेव जगदशेषम्, उत्फुल्लकमलकाननसनाथमिव गगनं कुर्वता, दुग्धाम्भोधिसहस्राणीवोद्वमता, कुन्दनीलोत्पलमालालक्ष्मीमिवोपहसता, नयनयुगलेन भूषिताम्; दशनरत्नतुलादण्डेन, नयनसमुद्रसेतुबन्धेन, यौवनमन्मथमत्तवारणयोर्वरण्डकेनेव नासावंशेन परि-

---

वर्णनं कविसम्प्रदायः ; तथा च माघः,—"छादितः कथमपि त्रपयाऽन्तर्यः प्रियं प्रति चिराय रमण्या । वारुणीमदविशङ्कमथाविष्कृतोऽभवदसाविव रागः ॥" इति । रागसागरोऽनुरागसमुद्रस्तत्सम्बन्धिविद्रुमस्य प्रवालतरोर्नवपल्लवेनेव । अत्र प्रौढोक्तिरपि,—"प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम्" । ("विद्रुमः पुंसि प्रवालः पुंनपुंसकम्" इत्यमरः) नयनयुगलेन भूषितामित्यन्वयः । तरुणतरकेतकदलदाघीयसा तद्वद्दीर्घेण । [ईयसुनि "प्रियस्थिर—" इत्यादिना दीर्घशब्दस्य द्राघादेशः । "दलं पर्णं छदः पुमान्" इत्यमरः] पक्ष्मलं पक्ष्मयुक्तं चटुलं चञ्चलमलसं मन्दं तादृशेन । हृदयमेव वासगृहं तत्रावस्थितस्य हृच्छयविलासिनः कामविलासिनो गवाक्षशङ्कां वातायनशङ्कामुपजनयता । ("वातायनं गवाक्षः" इत्यमरः) सरागेण सानुरागेण, निर्वाणं मोक्षं कुर्वतेति विरोधः । ("मुक्तिः कैवल्यनिर्वाणम्" इत्यमरः) परिहारस्तु—निर्वाणं निर्वृतिः, एतद्दर्शनाज्जनानां पदार्थान्तरेभ्यश्चेतसो निवृत्तिरिति भावः । [निर्वाणोऽवात इति निपातः] गतिप्रसररोधकश्रवणकृतकोपेनेव अन्तस्य समीपमुपान्तं प्रान्तदेशस्तत्र लोहितेन रक्तेन । [उपान्तमिति "विभक्ति" इत्यादिना सामीप्येऽव्ययीभावः । "रोहितो लोहितो रक्तः" इत्यमरः] दृष्टेश्चारुत्वं विशेषं वर्णयन्नाह—धवलयता धवलं कुर्वता जगदशेषम् । उत्फुल्लानि व्याकोशानि कमलानि तेषां काननं तेन सनाथं गगनमन्तरिक्षं कुर्वता । ("प्रफुल्लोत्फुल्लसम्फुल्ल-व्याकोशविकचस्फुटाः" । "नभोऽन्तरिक्षं गगनम्" इत्युभयत्राप्यमरः) दुग्धाम्भोधिसहस्राणीवोद्वमतोद्गिरता । [टु वम उद्गिरणे] कुन्दनीलोत्पलमालालक्ष्मीमिवोपहसता, तदधिकशोभनत्वादिति भावः । नासावंशेन परिष्कृतां भूषितामित्यन्वयः । ("भूषितश्च परिष्कृतः" इत्यमरः) दशनरत्नानि दन्तरत्नानि तेषां तुलादण्डेन । नयनसमुद्रस्य सेतुबन्धेन । ("सेतुरालौ स्त्रियां पुमान्" इत्यमरः) यौवनमन्मथावेव मत्तवारणौ

ष्कृताम्; विलोचनेन्दीवरभ्रमरपङ्क्तिभ्यां, मुखमदनमन्दिरतोरणाभ्यां, रागसागरवेलाभ्यां, यौवननर्त्तकलासिकाभ्यां, भ्रूलताभ्यां विराजमानाम्; घनसमयाकाशलक्ष्मीमिवोन्नतचारुपयोधराम्; जयशब्दघोषणापन्नजनमूर्त्तिमिवोन्नततुलाकोटिप्रतिष्ठिताम्; सुयोधनधृतिमिव कर्णविश्रान्तलोचनाम्; वामनलीलामिव दर्शितवलिविभङ्गाम्; हस्तिकराशिरविस्थितिमिवातिक्रान्तकन्यातुलाम्, उषामिवानिरुद्धदर्शनसुखां, शचीमिव

---

समागतौ तयोरेकस्थकेन, "भित्त्वोभयपार्श्वे द्वौ स्थापयित्वा मतङ्गजौ। योधयन्तीति प्रसिद्धं भित्तिः सा तु वरण्डकम्॥" "वरण्ड" इति भाषायां प्रसिद्धम्। ("कुञ्जरो वारणः करी" इत्यमरः) रूपवर्णनप्रसङ्गेनैवाह—भ्रूलताभ्यां विराजमानां शोभमानामित्यन्वयः। विलोचनेन्दीवरस्य नेत्रनीलोत्पलस्य भ्रमरपङ्क्तिभ्याम्। ("इन्दीवरं च नीलेऽस्मिन्" इति कुमुदवर्गेऽमरः) मुखमदनमन्दिरस्य तोरणाभ्यां बहिर्द्वाराभ्याम्। ("तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः) रागसागरोऽनुरागसमुद्रस्तद्वेलाभ्याम्। ("अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इत्यमरः) यौवननर्त्तकलासिकाभ्याम्। ("नर्त्तकीलासिके समे" इत्यमरः) श्लेषेणाह—घनसमयो वर्षाकालस्तत्र यदाकाशं तस्य लक्ष्मीः शोभा तामिवोन्नतचारुपयोधराम्। ("स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः) जयशब्दस्य घोषणामापन्ना प्राप्ता या जनमूर्त्तिस्तामिवोन्नततुलाकोटौ प्रस्फुरमाणतुलाग्रे प्रतिष्ठितां स्थिताम्; परीक्षासमये शुद्धीभवन् सर्वैर्जय जयेत्युच्यते। ("उच्चघुष्टं तु घोषणा" इत्यमरः) पक्षे—उन्नमत्तुलाकोटिना शोभमानचरणाग्रेण प्रतिष्ठितां प्राप्तप्रतिष्ठाम्। ["तदस्य सञ्जातम्" इति तारकादित्वादितच्। "पादाङ्गदं तुलाकोटिः" इत्यमरः) सुयोधनो दुर्योधनस्तस्य धृतिर्धैर्यमिव कर्णविश्रान्तलोचना तां, यावत् कर्णं पश्यति तावत् तस्य धृतिरिति भावः। पक्षे—कर्णयोः श्रोत्रयोर्विश्रान्ते लोचने यस्यास्ताम्। ("कर्णशब्दग्रहौ श्रोत्रम्" इत्यमरः) वामनलीलामिव वामनावतारविष्णुलीलामिव दर्शितो बलेस्तन्नाम्नो दैत्यस्य विभङ्गो यस्यां ताम्। पक्षे—दर्शिता वलीनां त्रिवलीनां विभङ्गा यस्यां ताम्। ("वलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरः) हस्तिकराशौ रविस्थितिमिवातिक्रान्ते कन्यातुले तन्नामकराशी यया तां, तयोरुत्पूर्वत्वादित्यर्थः। पक्षे—अतिक्रान्ता कन्यानां तुला तुलना यया ताम्। उषा बाणासुरस्य कन्या तामिवानिरुद्धस्य दर्शनेन सुखं यस्याः ताम्।

नन्दनेक्षणरुचिं, पशुपतिताण्डवलीलामिवोल्लसच्चक्षुःश्रवसम्, अटवीमिवोत्तुङ्गश्यामलकुचां, वानरसेनामिव सुग्रीवाङ्गदोपशोभिताम्; भास्वताऽलङ्कारेण, चन्द्रेण वदनमण्डलेन, लोहितेनाधरपल्लवेन, सौम्येन दर्शनेन, गुरुणा नितम्बबिम्बेन, विकचेन नेत्रकमलेन, शनैश्चरेण पादेन, तमसा केशपाशेन ग्रहमयी-

---

पक्षे—अनिरुध्यमानवारं दर्शनसुखं यस्यास्ताम्। शचीमिवेन्द्राणीमिव नन्दनमिन्द्रवनमस्येक्षणे रुचिरिच्छा यस्यास्ताम्। ("पुलोमजा शचीन्द्राणी"। "नन्दनं वनम्" इतीन्द्रप्रकरणे द्वयोरप्यमरः) पक्षे—नन्दयतीति नन्दना, [नन्द्यादित्वात् कर्तरि ल्युः। अजादित्वाट्टाप्] तादृशी ईक्षणरुचिर्नेत्रकान्तिर्यस्यास्ताम्। ("ईक्षणं चक्षुरक्षिणी" इत्यमरः) पशुपतेः शिवस्य ताण्डवलीलामिवोल्लसच्चक्षुःश्रवसमुल्लसत्सर्पाम्। ("ईशः पशुपतिः शिवः"। "ताण्डवं नटनं नाट्यम्"। "चक्षुःश्रवाः काकोदरः फणी" इति त्रिष्वप्यमरः) पक्षे—उल्लसच्चक्षुःश्रवसं शोभमाननेत्रकर्णाम्। अटवीमिवारण्यमिवोत्तुङ्गा उच्चाः श्यामा लकुचा यस्यां ताम्। ("अटव्यरण्यं विपिनम्"। "लकुचो लिकुचो डहुः" इति द्वयोरप्यमरः) "बडहर" इति भाषायाम्। पक्षे—उत्तुङ्गौ श्यामलौ कुचौ स्तनौ यस्यास्ताम्। दग्ध पट इतिवदवयवधर्मस्य समुदाये समारोपात् कुचयोः श्यामलतावर्णनम्। ("कालश्यामलमेचकाः" इत्यमरः) वानरसेनामिव सुग्रीवाङ्गदेनोपशोभिताम्। पक्षे—शोभना ग्रीवा यस्याः सा चासावङ्गदेन केयूरेणोपशोभिता च ताम्। ("केयूरमङ्गदं तुल्ये" इत्यमरः) रत्नावलीशुभाभ्यामाह—ग्रहमयीमिवेत्यन्वयः। भास्वता शोभमानेनालङ्कारेण भूषणेन। पक्षे—भास्वान् सूर्यः। ("भास्वद्विवस्वत्सप्ताश्व—" इत्यमरः) चन्द्रेणाह्लादकेन। [चदि आह्लादे। "स्फायितञ्चि—" इति रक्] वदनमण्डलेन। पक्षे—चन्द्रेण चन्द्रमसा। ("हिमांशुश्चन्द्रमाश्चन्द्रः" इत्यमरः) लोहितेन रक्तेनाधरपल्लवेन। ("रोहितो लोहितो रक्तः" इत्यमरः) पक्षे—लोहितेन भौमेन। ("कुजो भौमो लोहिताङ्गो महीसुतः" इत्यमरः) सौम्येन मनोहरेण दर्शनेन विलोकनेन। पक्षे—सौम्येन बुधेन। ("रौहिणेयो बुधः सौम्यः" इत्यमरः) गुरुणा महता नितम्बबिम्बेन। पक्षे—गुरुणा बृहस्पतिना। ("बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः" इत्यमरः) विकचेन विकसितेन विलोचनोत्पलेन नेत्रोत्पलेन। पक्षे—विगतः कचो बृहस्पतिपुत्रो यस्माद्विकचः शुक्रः। ("शुक्रे केतौ च विकच उत्फुल्ले च निगद्यते" इति विश्वः) शनैर्मन्दं चरति गच्छति तादृशेन पादेन, तमसा

मिव ; संसारभित्तिचित्रलेखामिव, त्रैलोक्यसौन्दर्य्यसङ्केतभूमिमिव, रसायनसिद्धिमिव यौवनमहायोगिनः, सङ्कल्पभित्तिमिव शृङ्गारस्य, निधानमिव कौतुकस्य, त्रिभुवनविजयपताकामिव मकरध्वजस्य, आविर्भूतिमिव मनसः, अभिभूतिमिव मदनस्य, स्तम्भनचूर्णमिवेन्द्रियाणां, मोहनशक्तिमिव मन्मथस्य, विहारस्थलीमिव सौन्दर्य्यस्य, एकायतनशालामिव सौभाग्यस्य, उत्पत्तिस्थानमिव लावण्यस्य, आकर्षणसिद्धिमिव मनसः,

गमनातिशयेति भावः। पक्षे—शनैश्चरः सौरिः। ("शनौ सौरिशनैश्चरौ" इत्यमरः) तम इव तमश्छादिना केशपाशेन मार्दवदैर्घ्यश्यामतादिगुणेन, अन्यपदार्थे चतुर्गतिप्रतिरोधकत्वादिति भावः। ("कचः केशः शिरोरुहः"। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः) पक्षे—तमसा राहुणा। ("तमस्तु राहुः स्वर्भानुः" इत्यमरः। सर्वशोपलक्षणे तृतीया) राहुकेत्वोरेकत्वात् "शुक्रे केतौ च विकचः" इति विश्वकोषात् विकचशब्देन वा केतोरपि संग्रहः। "कमितं प्रकृतार्थानां न्यासं रत्नावलीं विदुः"। संसारभित्तिचित्रलेखामिव, चित्रलेखेवेयं शोभिकेति भावः। यौवनमहायोगिनः रसायनसिद्धिमिव जराव्याधिनाशन सद्यस्सन्तकृतिकृत् स्वर्णरोप्यजनको यौषधिविशेषो रसायनम्। शृङ्गारस्य सङ्कल्पभित्तिमिव। ("सङ्कल्पः कर्म मानसम्" इत्यमरः) कौतुकस्य कौतूहलस्य निधीयतेऽस्मिन् निधानमाश्रयः। ("कौतूहलं कौतुकं च" इत्यमरः) मकरध्वजस्य कामस्य त्रिभुवनविजयपताकामिव, इनुमत्पताकादिवदिति भावः। ("पुष्पधन्वा रतिपतिर्मकरध्वजः" इत्यमरः) मनस आविर्भूतिमिव। मदनस्याभिभूतिमिव अभिभवकारणमिवेत्यर्थः। इन्द्रियाणां चक्षुरिन्द्रियकर्मेन्द्रियाणां स्तम्भनचूर्णमिव, एतद्दर्शनादेव स्तम्भनरूपसात्त्विकभावाविर्भाव इति भावः। मन्मथस्य मोहनशक्तिमिव, मदनो यथा जगन्मोहयति सैवेयं मूर्त्तिमतीति भावः। सौन्दर्य्यस्य विहारस्थलीमिव विहारः क्रीडा तदर्थं स्थली पुरुषेणासंस्कृता भूमिस्तामिव ; एतेनेयमलङ्कारादिपुरुषसंस्कारहीनाऽपि रम्यैवेति स्वाभाविकसौन्दर्य्यातिशयो ध्वनितः। तथा च कालिदासः—"सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति। इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥" इति। सौभाग्यस्य सुभगतायाः एका प्रधाना आयतनशाला चैत्यशालामिव। ("एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा"। "चैत्यमायतनं तुल्ये",

चक्षुर्बन्धमिव मन्मथेन्द्रजालिनः, त्रिभुवनविलोभनसृष्टिमिव प्रजापतेः, कन्यकामष्टादशवर्षदेशीयामपश्यत् स्वप्ने।

अथ तां प्रीतिविस्फारितेन चक्षुषा पिबन्निव जनितेर्ष्ययेव निद्रया चिरसेवितया मुमुचे। विबुद्धस्तु विषमशरेणेव दुर्जनवचसेव निमग्नमात्मानं धारयितुं न शशाक।

तथा हि, क्षणमाकाशतलमालिङ्गन् प्रसारितबाहुयुगलः "एह्येहि प्रियतमे! क्व गच्छसि?" इति दिक्षु लिखितामिवोत्कीर्णामिव चक्षुषि निखातामिव हृदये प्रियतमामाजुहाव। ततस्तत्रैव शय्यातले निमीलितनयनो निषिद्धाशेषपरिजनो दत्तकपाटः परिहृतताम्बूलाहारादिसकलोपभोगस्तद्दिनमनयत्। तथैव निशामपि स्वप्नसमागमेच्छाभिरनैषीत्।

---

इत्यमरः) चाक्षुष्यशोभामिव। ("मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु लावण्यमिहोच्यते॥" इति मेदिनी।) मदन चाकर्षणनिर्मितमिव स्वर्णावर्षवर्षेरादिनिर्मितमिवेत्यर्थः। मन्मथेन्द्रजालिनः इन्द्रजालविद्यानिपुणस्य चक्षुर्बन्धमिव। प्रजापतेर्ब्रह्मणस्त्रिभुवनविलोभनसृष्टिमिव।

अथ स्वप्नदर्शनानन्तरं प्रीतिविस्फारितेन विकसितेन चक्षुषा तां पिबन्निव, अत एव चिरसेवितया निद्रया जनितेर्ष्ययेव; मयि विद्यमानायां मत्सकाशात् पालायामस्यामनुरक्तोऽयमिति सेर्ष्यात्वम्; "सतां माने म्लाने मरणमथवा दूरगमनम्" इति। मुमुचे मुक्तः; स इति शेषः। विबुद्धस्तु जागरितस्तु विषमशरेणेव दुर्जनवचसेव निमग्नमात्मानं धारयितुं सावधानतया व्यवहारे प्रवर्तयितुं न शशाक।

चक्षुःप्रीतिरित्यादिदशावस्थासु उन्मादावस्थां वर्णयति—क्षणं तावत्कालमाकाशतलमालिङ्गन्, आकाशतलालिङ्गनेन मोहवशात् पतितो दृश्यमानायाः प्रियतमाया आलिङ्गनं मन्यते अत एवाह "क्व गच्छसि? प्रियतमे!" इत्याद्युक्तम्। प्रसारितबाहुः एह्येहीति सम्भ्रमे द्विरुक्तम्; प्रियतमे! क्व गच्छसि? इति दिक्षु लिखितामिव। चक्षुष्युत्कीर्णामिव विक्षिप्तामिव। [कॄ विक्षेपे] हृदये निखातामिव प्रियतमामाजुहाव। ततस्तत्रैव शय्यातले निमीलितनयनो निषिद्धाशेषपरिजनो निवारितसकलसेवकवर्गो दत्तकपाटः परिहृतताम्बूलादिसकलोपभोगः, व्यक्ताहार इति भावः। तथा च भारविः,—"आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन।

अथ तस्य प्रियसखो मकरन्दो नाम कथमपि लब्धप्रवेशः कन्दर्पसायकप्रहारपरवशं कन्दर्पकेतुमुवाच,—"सखे ! किमिदमसाम्प्रतमसाधुजनोचितमध्वानमाश्रितोऽसि ? तवैतच्चरितमालोक्य वितर्कदोलासु निवसन्ति सन्तः, खलाः पुनस्तदनिष्टमनुचितमेवावधारयन्ति, अनिष्टोद्भावनरसोत्तरं हि खलहृदयं, को नामास्य तत्त्वनिरूपणे समर्थः ? तथा हि, भीमोऽपि न बकद्वेषी, आश्रयाशोऽपि मातरिश्वा, अतिकटुरपि महारसः, सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि न कटुत्वं जहाति, तालफलरस इवापातमधुरः परिणामविरसस्तिक्तश्च,

---

सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥" इति । तद्दिवसमनयत् । ("कपाटमररं तुल्ये" इत्यमरः) तथैव पूर्वोक्तप्रकारेणैव तस्याः स्वप्नसमागमलालसेच्छाभिर्निशामप्यनयत् ।

अथ तादृगवस्थोत्तरं तस्य कन्दर्पकेतोः प्रियसखो मकरन्दो नाम कथमपि कपाटविघटनादिमहाक्लेशाल्लब्धप्रवेशः कन्दर्पसायकपरवशान्तःकरणं कन्दर्पकेतुमुवाच । [प्रियसख इत्यत्र "राजाहःसखिभ्यष्टच्" इति समासान्तष्टच्] सखे ! किमिदमसाम्प्रतमनुचितमसाधुजनोचितमध्वानं व्यवहारमाश्रितोऽसि ? सन्तस्तव प्रशास्त्वयोरतिभूमेरेतच्चरितमालोक्य वितर्कदोलासु संशयदोलासु निवसन्ति, संशयिता भवन्तीति भावः । काव्यलिङ्गेनाह—खलाः पुनस्तदनिष्टमनिष्टमेवावधारयन्ति निश्चिन्वन्ति । अनिष्टोद्भावनेऽनभिमतप्रकाशने यो रसोऽनुरागस्तदुत्तरं प्रधानं यस्य तादृक् । अस्य खलस्य । भीमोऽपि युधिष्ठिरानुजोऽपि बकद्वेषी बकद्वेष्टा नेति विरोधः । भीमो भयानकोऽपि नवकान् स्तुत्यान् द्वेष्टि तादृक्, अपिरर्थे इत्यविरोधः । [अश भोजने] आश्रयाशोऽग्निरपि मातरिश्वा वायुरिति विरोधः । ("श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः" इत्यमरः) आश्रयमश्नाति तादृशः यमाश्रयति तस्यैव भक्षक इत्यर्थः । ("आश्रयाशो हुतवहे भवेदाश्रयनाशके" इति विश्वप्रकाशः) मातरि जनन्यां, तत्सदृशे पोषके, श्वा कुक्कुरः, अनुचिताचरणत्वात् तत्सदृश इति भावः इत्यविरोधः । अतिकटुर्महारसः, अतिकटोर्महारसत्वं विरोधः । अतिकटुरतिकटुप्रकृतिर्महांश्चासावरसश्चेति महारसः । सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि पादप्रणामादिना । पक्षे—अधिकरणस्य करणत्वेन

पादपराग इवावधूतो मूर्द्धानं कषाययति, विषतरुप्रसव इव यथा यथाऽनुभूयते तथा तथा मोहमेव दृढयति, न वारिविरहो-ऽस्य जायते नीचदेशस्येव, निदाघदिवस इव बहुमत्सरो वहति तापं सुमनसाम्, अन्धकार इव दोषानुबन्धचतुरो विश्वकर्माव-लोपनोद्यतश्च, विरूपाक्षोऽपि चक्रधरः, शक्राश्व इवोच्चैःश्रवा

---

कर्णनम्; शिरसि धृतोऽपि कटुत्वं न जहाति। काटवमिति पाठस्तत्सम्बन्धस्मारकत्वा-दुपेक्ष्यः। तालफलरस इवापातमधुरो भोजनप्रारम्भ एव मधुरः परिणामविरस-स्तिक्तश्च। पक्षे—पातो दोषस्तमनभिव्याप्यापातं मधुरः हिताभाषाचरणेन सधुरः, परिणामे दोषप्राप्त्यनन्तरं विरस उदासीनः, तिक्तः प्रतिजनं मर्मप्रकाशकः। पाद-पराग इव चरणरेणुरिवावधूतः क्षिप्तस्तिरस्कृतश्च, मूर्द्धानं शिरः कषाययति धूसरयति पीडयति च। ("परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि"। "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्"। "मूर्द्धा ना मस्तकोऽस्त्रियाम्" इति विश्वामरः) विषतरु-प्रसव इव यथा यथा अनुभूयते सेव्यते, तथा तथा मोहमेव मूर्च्छां वैचित्त्यं वा दृढयति स्थिरीकरोति। नीचदेशस्येव निम्नभूभागस्येव वारिविरहो जलविरहो न जायते। पक्षे—वा अव्ययानामनेकार्थत्वाद्वा-शब्द एवार्थे; न वा नैवास्य खलस्यारि-विरहः शत्रुविरहो जायते, सर्वमार्गोद्यतत्वादिति भावः। ("रिपौ वैरिसपत्नारि-द्विषद्द्वेषणदुर्हृदः" इत्यमरः) निदाघदिवस इव ग्रीष्मर्तुदिवस इव बहुमत्सरो बहुमक्षिकः सुमनसां पुष्पाणां तापं वहति। ("मक्षिका मत्सरा ज्ञेया भ्रमराली च सा मता" इत्युत्तरतन्त्रम्। "मत्सरः कृपणे क्रोधे मक्षिकासु च मत्सरः" इति धरणिः। "स्त्रियः सुमनसः पुष्पम्"। "निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः" इति द्वयोरप्यमरः) पक्षे—बहुमत्सरो बहुमात्सर्यवान् क्रोधी वा, सुमनसां शुद्धान्तः-करणानाम्। ("मत्सरोऽन्यशुभद्वेषः" इत्यमरः। "कश्चित् क्रोधेऽपि मत्सरः" इति रत्नकोषः) अन्धकार इव दोषा रात्रिस्तस्या अनुबन्धे चतुरः, विश्वकर्मा आदित्यस्तस्याव-लोपनमाच्छादनं तत्रोद्यतः। ("विश्वकर्मा देवशिल्पी विश्वकर्मा दिवाकरः" इत्युत्तर-तन्त्रम्) पक्षे—दोषस्यानुबन्धे आरोपे चतुरः, विश्वेषां कर्म क्रिया तस्य अवलोपनं छेदनं तत्रोद्यतः। विरूपाक्षः शिवः चक्रधरो विष्णुरिति विरोधः। विरूपाक्षो विषमव्यवहारः, चक्रधरो दम्भभेदधरः इति परिहारः। ("चक्रं ग्रामार्थकट व्यवहारे च प्रापके" इति मेदिनीकरः। "जलावर्ते समूहे च दम्भभेदरथाङ्गयोः। अस्त्रादि

नदेशजप्रशंसो च, सरस्येव विभिन्नस्यापि सतः स्नेहं दर्शयतोऽपि तक्राट इव हृदयं विलोड़यति, यज्ञबलिरिवात्मघोषमुखरो मण्डलभ्रमणकथकश्च, मत्तमातङ्ग इव स्ववशाऽऽलोलमुखोऽधरीकृतदानश्च, वृषभ इव सुरभियानविकलः, कामीव गोत्रस्खलनविधुरो वामाध्वानुरक्तश्च, अजीर्णविकार इव कलेवरे वचसि मन्दिमानमावहति, वञ्चक इव कटपले रक्तो विभावरीरतश्च,

च वेलायां चक्रं चापि विदुर्बुधैः"। इति रन्तिदेवः) अज्ञाश्च उच्चैःश्रवा उच्चैःश्रवः प्रसङ्गः। ("हय उच्चैःश्रवाः" इतीन्द्रस्य हरयोऽमरः) नदेशात् समुद्राज्जात-वाहस्य तस्य प्रशंसायां स्वभावभूतः। पक्षे—उच्चैःश्रवा बधिरः परकीयवार्ताश्रवणे, देशजात् प्रशंसितुं श्रोतुमक्षम ताद्दशो न भवति तथाविधः। सरस्येव दध्युपमानस्येव विभिन्नस्यापि सञ्जातस्यापि सतः स्नेहोर्विंद्यमानस्य च स्नेहमनुरागं चैक्कण्यं च दर्शयतोऽपि तक्राट इव मन्थान इव हृदयं विलोड़यति। ("सरो दध्युपमानः स्यात्" इति रत्नकोषः। "भिन्नो दारितसङ्गतौ" इत्यमरः। "स्नेहोऽनुरागश्चैक्कण्यं तैलेऽपि च निगद्यते" इति धरणिः। "वैशाखो दधिचारः स्यात् तक्राटवरघर्षणौ" इति हारावली) यज्ञबलिरिवात्मघोषेण काकेन मुखरः काकशब्देन सशब्दः, मण्डल-भ्रमणं कुक्कुरभ्रमणं तत्कथकस्तत्सूचकः। ("ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि" इत्यमरः। "कौलेयकः सारमेयो मण्डलः श्वा गतत्रपः" इति व्याडिः) पक्षे—आत्मघोषेणात्मस्तुत्या मुखरः, मण्डले देशादौ भ्रमणं तत्कथकः। मत्तमातङ्ग इव स्ववशायां निजकरिण्यामालोलं मुखं यस्य सः, अधरीकृतदानः मदजलस्याति-वर्षणादधरीकरणम्। पक्षे—सुष्ठु अवशमवाच्यवाचित्वादालोलं मुखं यस्य सः, अधरीकृतं दानं वितरणं येन ताद्दशः। वृषभ इव सुरभेर्गोर्यानेन गमनेन विकलो विह्वलः तदनुधावनेन वा विह्वलः। पक्षे—सुरभिया देवभयेन न विकलः। ("भीतिर्भीः साध्वसं भयम्" इत्यमरः) कामीव गोत्रस्खलनं नामस्खलनं तेन विधुरः, वामानां स्त्रीणामध्वा मार्गस्तत्रानुरक्तः। ("गोत्रं तु नाम्नि च" "प्रतीपदर्शिनी वामा वनिता महिला तथा" इत्युभयत्राप्यमरः) पक्षे—गोत्रस्खलनं वंशस्खलनं, वामाध्वा विपरीताचरणम्। ("वामौ वल्गुप्रतीपौ च" इत्यमरः) अजीर्णविकार इव कलेवरे शरीरे वचसि वचने मन्दिमानमावहति। ("अथ कलेवरम्। गात्रं वपुः संहननम्" इत्यमरः) पक्षे—कलेऽव्यक्तमधुरे वरे श्रेष्ठे वचसि वचने मन्दि-

परीत इव बन्धुतापदर्शनः, परशुरिव भद्रश्रियमपि खण्डयति, कुद्दाल इव दलितगोत्रः क्षमाभाजः प्राणिनो निकृन्तति, रतकील इव जघन्यकर्मलग्नो क्षेपयति साधून्, दुष्टशूर्पश्रुतिरिव काननरुचिरनुगतमपि यवसं ततं नानुमोदते।

---

मानसाबहति, बाधाट इति भावः। वञ्चक इव शृगाल इव श्वेव वा कटदनं मृतमांसे रक्तः, विभावर्यां रात्रौ रक्तश्च। ("शृगालवञ्चकक्रोष्टु—"। "विभावरीतमस्विन्यौ रजनी" इत्युभयत्राप्यमरः। "प्रतारकश्चौरेषु वञ्चकः परिकीर्तितः" इति शाश्वतः। "कटः समयबन्धेऽपि तथेऽपि मृतकेऽपि च" इति विश्वः। "पलः प्रतारणे काले शय्यामांसे पलं मतम्" इति धरणिः) पक्षे—कटे समयबन्धे पलः प्रतारणं तस्मिन् रक्तः शपथपूर्वकप्रतारक इति भावः। विभौ स्वामिन्यपि रक्तः रक्तः धनलोभादिना। [ चकोरक्त इत्यत्र "रो रि" इति लोपे "ढ्रलोपे" इति दीर्घः ] ("समयाः शपथाचार-कालसिद्धान्तसंविदः" इत्यमरः) परीत इव बन्धुताया बन्धुसमूहस्यापगतं दर्शनं यस्य। ("ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः" इत्यमरः। "ग्रामजनबन्धुभ्यस्तल्" इति तल्-प्रत्ययः) पक्षे—बन्धून् तापयति तादृशं दर्शनं यस्य सः। परशुरिव भद्रश्रियं चन्दनं खण्डयति। ("भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः) पक्षे—भद्रं कल्याणं, श्रियं लक्ष्मीम्। ("शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः) यद्वा—भद्रश्रियं साधुसम्पदम्। ("सद्भोके चन्दनेऽपि स्यादिष्टार्थः साधुसम्पदि" इति धरणिः) कुद्दाल इव दलिता गोत्रा पृथ्वी येन तादृशः, क्षमां पृथ्वीं भजन्ति तादृशान् प्राणिनो वृक्षादीन् निकृन्तति छिनत्ति। वृक्षादीनां प्राणित्वं "अचिरहिंसार्थस्य न" इति वार्त्तिके चाकरे स्पष्टम्। कुद्दालः "कुदाली" इति भाषायाम्। पक्षे—दलितगोत्रो नाशितवंशजः, क्षमाभाजः शान्तियुतान् प्राणिनो मनुष्यान्। ("क्षितिक्षान्त्योः क्षमा" इत्यमरः) रतकील इव कुक्कुर इव जघन्यकर्मणि मार्गे एवं सुरतादौ लग्नः क्षेपयति साधून्। ("कुक्कुरो रात्रिजागरः। रसनालिह् रतवराः कौलशायिवक्राङ्गुलाः" इति हेमचन्द्रः। रतपरा रतशब्दात् पराः कीलादयः, तथा च रतकीलादयश्चत्वारः शब्दा इति कोषार्थः) पक्षे—जघन्यकर्म नीचकर्म। दुष्टशूर्पश्रुतिरिव दुष्टगज इव कानने वने रुचिर्यस्य तादृशः, अनुगतं ततं विस्तृतं यवसं तृणं नानुमोदते। ("द्विपायिशूर्पश्रुतिकुम्भिसामजाः" इति हारावली। "यवसं तृणमर्जुनम्" इत्यमरः) पक्षे—का इवत् आननरुचिर्वदनकान्तिर्यस्य लोकानां

अबीजादेव जायन्ते, अकाण्डादेव प्ररोहन्ति खलव्यसनाङ्कुरा दुरुच्छेदा भवन्ति। असतां हि हृदि प्रविष्टो दोषलवः करालायते, सतां तु हृदि न विशत्येव, यदि कदाचिद्विशति पारद इव क्षणमात्रमपि नावतिष्ठते। साधवो मृगा इव विनोदबिन्दोः श्रवणवशगाः, सुखं जनाः शरत्समया इव भवादृशाः, मित्रस्य हृदयं हरन्ति। न च अचेतना विसदृशमुपदिशन्ति, अचेतनानामपि मैत्री समुचितपक्षे निक्षिप्ता।

---

विकाराद्धीनकान्तिरिति भावः। [ "हुँ दर्थे च" इति आदेशः ] अनुगतमपि यवर्षं दत्तं ततं वीणादिवाद्यं च नानुमोदते। ("घनो दघवाद्ययोः"। "ततं वीणादिवाद्येऽपि विस्तारेऽपि ततं मतम्" इत्युभयत्रापि विश्वः)।

खलव्यसनाङ्कुरा अबीजादेवाकारणादेव जायन्ते। अकाण्डादेवाप्रस्तावादेव प्ररोहन्ति, अत एव दुरुच्छेदा भवन्ति, यो हि बीजाज्जायते काण्डात् स्कन्धात् प्ररोहति स सूच्छेदो भवति मूलत्वादिति भावः। ("हेतुर्ना कारणं बीजम्"। "अस्त्री प्रकाण्डः स्कन्धः स्यात्" इत्युभयत्राप्यमरः) असतां हृदि प्रविष्टो दोषलवः करालायते भयावहो भवति, सतां हृदि तु न विशत्येव, दोषलव इति शेषः पूर्वोत्तरयोरपि। यदि कदाचिद्विशति, पारद इव क्षणमात्रमपि नावतिष्ठते, हृदये इति शेषः। ("रसः सूतश्च पारदः" इत्यमरः) अथ यदि वदति विसदृशमुपदिशसि? असदृशं वा? न तमुपदेशमुरीकरोमीति तत्राह—साधवः सन्तो मृगा इव हरिणा इव विनोदबिन्दोर्विनोदवेदितुः, रसरमणपटोः पुंसः श्रवणेनाकर्णनेन वशगा भवन्ति। ("ज्ञाता तु विदुरो विन्दुः" इत्यमरः) वीणा श्रूयते मृदङ्गः श्रूयते इत्यादौ तद्ध्वनिवत् पुंसः श्रवणेन तद्गीतश्रवणं लक्ष्यते। तथा च माघः,—"अश्रावि भूमिपतिभिः क्षणवीतनिद्रैरश्नन् पुरो हरितकं मुदमादधानः। ग्रीवाग्रलोलकलकिङ्किणिकानिनादमिश्रं दधद्घनघुर्घुरशब्दमश्वः॥" इति। पक्षे—विनोदबिन्दोर्गातुः। ["आख्यातोपयोगे" इति पञ्चमी] श्रवणेन तदुपदेशश्रवणेन वशगाः। सदृशानामादृशाः, शरत्समया इव भवादृशा जनाः सुखं जनयन्ति; विच्छोभित्यादौ मधवादिक्रियाक्षेपवत् सुखमित्यनेन जननक्रियाक्षेपः; अत एव मित्रस्य हृदयं हरन्ति। पक्षान्तरे—शरत्समयाः सुखसनाः शोभनाः खञ्जना येषु तादृशाः। ("खञ्जरीटस्तु खञ्जनः" इत्यमरः) अचेतनाः, मित्रस्येति शेषः, विसदृशमसदृशं

तथा हि, माधुर्य्य-शैत्य-शुचित्व-सन्तापशान्तिभिः पयः पय इवेति मित्रतामुपगतस्य दुग्धस्य तत्सङ्गमाद्दाहितस्य क्वाथेन ममैव पुरो युक्तः क्षय इति विचिन्त्येव वारिणाऽपि क्षीयते ; तदिदमसाम्प्रतमाचरितं सखे ! गृहाण साधुजनोचितमध्वानं, साधवो हि दिङ्मोहात् परमुत्पथप्रवृत्ता भवन्ति" ।

इत्यादि वदति तस्मिन् कथमपि स्मरशरनिकरप्रहारपरवशः परिमिताक्षरमुवाच कन्दर्पकेतुः,—"वयस्य ! दितिरिव शतमन्युसमाकुला भवति मनोवृत्तिः ; नायमुपदेशकालः । पच्यन्त इवाङ्गानि, क्वथ्यन्त इवेन्द्रियाणि, भिद्यन्त इव मर्माणि,

---

नोपदिशन्ति । अचेतनानामपि मैत्री समुचितपदे योग्यत्वे नित्यता, तर्हि सचेतनमैत्र्याः का कथा ? इति भावः ।

"समानशीलव्यसनेषु सख्यम्" इतीममर्थं द्योतयन्नुभयसाधारणानि विशेषणान्याह, माधुर्य्येत्यादि ।—माधुर्य्य-शैत्य-शुचित्व-सन्तापशान्तिभिर्गुणैः पयो जलं पय इव दुग्धमिवेति मित्रतामुपगतस्य तत्सङ्गात् दुग्धसङ्गाद्दाहितस्य बहुमूल्यतामापन्नस्य पुरः पूर्वं ममैव क्षयो युक्त इति विचार्य्य वारिणा क्षीयते । [भावे प्रत्ययः] मीलितालङ्कारोऽयं । "समेतलक्ष्मणा वाऽपि वस्तुना यन्निगूह्यते । निजेनागन्तुना वाऽपि तन्मीलितमिति स्मृतम् ॥" इति लक्षणात् । तत् तस्मादिदमाचरितमसाम्प्रतमयुक्तम् ; सखे ! साधुजनोचितमध्वानं व्यवहारं गृहाण । साधवो हि दिङ्मोहात् परं केवलमुत्पथप्रवृत्ता उन्मार्गप्रवृत्ता भवन्ति न त्वसद्व्यवहारे इत्यर्थः ।

इत्यादि तस्मिन् मकरन्दे वदति सति, स्मरशरनिकरप्रहारपरवशः कामबाणव्यथाव्याकुलः, कथमपि महाक्लेशेन परिमिताक्षरमुवाच । वयस्य ! सखे ! चित्तवृत्तिर्दितिरिव दैत्यजननीव शतमन्युनेन्द्रेण समाकुला व्याकुला भवति । पक्षे— शतसङ्ख्याका मन्यवस्तैः समाकुला [शाकपार्थिवादिः] दितिर्गर्भनाशाय दितिप्रमादाच्छिद्रितगर्भे प्रविष्टः शक्र एकं गर्भं सप्तधा विभज्य सप्तधा विभक्तं प्रतिव्यक्ति सप्तधा बभञ्ज, त एवोनपञ्चाशद्देवा बभूवुरिति पुराणे प्रसिद्धम् । ("वयस्यः स्निग्धः सवयाः" । "शतमन्युर्दिवस्पतिः" । "मन्युः शोके तु शुक् स्त्रियाम्" इति त्रिष्वप्यमरः) अस्थे चित्ते हृदये, सम्बन्धोऽयमाह—नायमुपदेशकालः, कुतः ? अङ्गानि पच्यन्त इव शिथिलावयवानीव भवन्तीत्यर्थः । [कर्मकर्त्तरि साधुः । एवमग्रेऽपि] इन्द्रियाणि

निःसरन्तीव प्राणाः, उन्मूल्यन्ते इव विवेकाः, नष्टा स्मृतिः; तदधुना यदि त्वं सहपांशुक्रीडनसमदुःखसुखोऽसि, तदा मामनुगच्छ" इत्युक्त्वा परिजनालक्षितस्तेन सह नगरान्निर्जगाम।

अनन्तरं कतिपयनल्वशतमध्वानं गत्वा- अगस्त्यवचनसंहृतब्रह्माण्डगतशिखरसहस्रः, कन्दराऽन्तराल-लतागृहसुखसुप्त-विद्याधर-मिथुनगीताकर्णनसुखितचमरीशतमारणोत्सुकितशबर-शतसम्बाधकच्छः, कटककरिकराकृष्टभग्न-स्यन्दमानहरिचन्दनाऽऽमोदवाहि-गन्धवाहशिशिरितशिलातलः, सुदूरपतनभग्नताल-

क्रथ्यन्त इव; क्राथपाकयोर्भेदान्न पौनरुक्त्यम्। मर्माणि भिद्यन्ते इव विदीर्णानि भवन्तीत्यर्थः। प्राणा निःसरन्तीव। विवेका उन्मूल्यन्ते इव उत्पाट्यन्ते इव। स्मृतिर्नष्टा। मानसी गतिरत्र। ततोऽधुना यदि पांशुक्रीडने समदुःखसुखः; एतेन बाल्यसखत्वं ध्वनितम्। राजकुमाराणामेतादृक्क्रीडाऽसम्भवेऽपि लोकप्रवादानुकरणम्; तेन लोकोक्तिरलङ्कारोऽत्र। "लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते" इति लक्षणात्। तदा मामनुगच्छेत्युक्त्वा परिजनेनालक्षितस्तेन मकरन्देन सह नगरान्निर्जगाम।

अनन्तरं नगराद्बहिर्गमनोत्तरं कतिपयनल्वशतं तावत्परिमितमध्वानं मार्गं गत्वा, ताभ्यामिति शेषः, विन्ध्यो नाम गिरिरदृश्यतेति सम्बन्धः। ("किष्कुर्हस्ते वितस्तौ च" "नल्वः किष्कुचतुःशतम्" इत्युभयत्राप्यमरः) अगस्त्यवचनेन संहृतं ब्रह्माण्डगतं शिखरसहस्रं येन सः। ("कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः) अनुप्रासेनाह—कन्दरा दरी तदन्तराले लतागृहं तत्र सुखेन सुप्तानि विद्याधर-मिथुनानि तेषां गीतं गानं तदाकर्णनेन सुखितं चमरीणां मृगभेदस्त्रीणां शतं तन्मारणोत्सुकितं शबरशतं तेन सम्बाधः सङ्कटः कच्छतटो यस्य सः। ("दरी तु कन्दरो वा स्त्री"। "निषादश्वपचावन्ते-वासिचाण्डालपुक्कसाः। भेदाः किरात-शबर-पुलिन्दा म्लेच्छजातयः॥" "गोकर्णपृषतैणर्श्य-रोहिताश्चमरो मृगाः"। "सङ्कटं ना तु सम्बाधः कलिलं गहनं समे" इति चतुर्ष्वप्यमरः। "कूलं प्रतापः कच्छ-रोधसी। तटं तीरं प्रतीरं च" इति हेमः) "कच्छालिः" इति भाषायाम्। कटके अद्रिनितम्बे करिकरैः हस्तिशुण्डाभिराकृष्टान्यत एव भग्नान्यत एव स्यन्दमानानि प्रस्रवमाणानि हरिचन्दनानि तेषां आमोदोऽतिनिर्हारिगन्धस्तद्वाही गन्धवाही

फलरसार्द्रकरतलास्वादनोत्सुकशाखामृगः, प्रलम्बमाननिर्झरोपविष्टजीवञ्जीवमिथुनलेलिह्यमानविविधफलरसामोदसुरभितपरिसरः, सरभसकेसरिसहस्रखरनखरधाराविदारितमत्तमातङ्गकुम्भस्थलविगलितमुक्ताफलशबलितशिखरतया शिरोलग्नं तारागणमिवोद्वहन्, सुग्रीव इव ऋक्षगवयशरभकेसरिकुमुदसेव्यमानपादच्छायः, पशुपतिरिव नागनिःश्वाससमुत्क्षिप्तभूतिः, जनार्दन

वायुना शिशिरितं शिशिरवदाचरितं शिलातलं यत्र सः। ("कटकोऽस्त्री नितम्बोऽद्रेः"। "आमोदः सोऽतिनिर्हारी"। "गन्धवाहानिलाशुगाः"। "सुषीमः शिशिरो जडः। तुषारः शीतलः शीतः"। "पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥" इति पञ्चस्वप्यमरः। "हन्तिनाश्मा करः शुण्डा हस्तः" इति हैमः) [स्यन्द प्रस्रवणे] सुदूरपतनेन भग्नानि नालिफलानि तेषां रसेनार्द्रयोः करतलयोरास्वादनेन लेहनेनोत्सुकाः शाखामृगाः वानरा यत्र सः। ("द्वयोराशाद्वयतालः"। "शाखामृगवलीमुखाः मर्कटो वानरः कीशः" इत्युभयत्राप्यमरः) प्रलम्बमानान्यत एव निर्झरैरुपविष्टानि यानि जीवञ्जीवमिथुनानि चकोरमिथुनानि तैर्लेलिह्यमानानि पुनः पुनरास्वाद्यमानानि तादृशानि च तानि विविधफलानि तेषां रसामोदेन सुरभितः परिसरः प्रान्तदेशो यस्य सः तादृशः। [लेलिह्यमानेति यङ्लुगन्तात् कर्मणि शानच्] ("जीवञ्जीवश्चकोरकः"। "पर्यन्तभूः परिसरः" इत्युभयत्राप्यमरः) सरभसं सवेगं केसरिसहस्रस्य सिंहसहस्रस्य खरनखरधारया विदारितानि मत्तमातङ्गकुम्भस्थलानि तेभ्यो विगलितानि मुक्ताफलानि तैः शबलितशिखरतया शिरोलग्नं तारागणमिव नक्षत्रसमूहमिवोद्वहन्। ("हर्यक्षः केसरी हरिः"। "नखोऽस्त्री नखरोऽस्त्रियाम्"। "नक्षत्रमृक्षं भं तारा" इति त्रिष्वप्यमरः) पुनः श्लेषेणाह—सुग्रीव इव ऋक्षो जाम्बवान् गवयः शरभः केसरी कुमुद एतत्संज्ञकैर्वानरैः सेव्यमानपादच्छायः। ते च रामायणे—"गयो गवाक्षो गवयः शरभो गन्धमादनः" इति। पक्षे—ऋक्षो भल्लूकः, गवयो वनगवः, शरभः कुञ्जरद्विट्, केसरी सिंहः, कुमुदः कैरवं दिग्गजो वा, तैः सेव्यमाना पादानां प्रत्यन्तपर्वतानां छाया यस्य सः। ("ऋक्षाच्छभल्लभल्लूकाः"। "पादाः प्रत्यन्तपर्वताः" इत्युभयत्राप्यमरः। "गवयः स्याद्वनगवो गोसदृक्षोऽश्ववारणः"। "शरभः कुञ्जरारातिरुत्पादकोऽष्टपादपि" इत्युभयत्रापि हैमः। "कपीन्द्रः कुमुदः

इव विचित्रवनमालः, सहस्रकिरण इव सप्तपत्रस्यन्दनोपेतः, विरूपाक्ष इव सन्निहितगुहः शिवानुगतश्च, कामीव कान्तारोच-रसानुगतः समदनश्च, श्रीपर्वत इव सन्निहितमल्लिकार्जुनः, नरवाहनदत्त इव प्रियङ्गुश्यामासनाथः, शिशुरिव कृतधात्रीधृतिः, वासरारम्भ इव गैरिकारुणप्रभापाटलितवनराजिः, कृष्णपक्ष इव

---

स्तोऽपि कुमुदो दिग्गजः" इति शाश्वतः) पशुपतिरिव शिव इव नागनिःश्वासेन सर्पनिःश्वासेन समुद्भिन्ना भूतिर्भस्म यस्य सः। पक्षे—नागनिःश्वासेन गजनिःश्वासेन समुद्भिन्ना भूतिः सम्पत्तिर्यस्य सः। यद्वा—नागानां शिखिस्थानस्थितसर्पाणां निःश्वासेनेत्यादि। जनार्दन इव विष्णुरिव विचित्रा वनमाला यस्य सः। ("आपादपद्मं या माला वनमालेति सा स्मृता" इति) पक्षे—विचित्रा वनमाला वनपरम्परा यस्य सः। सहस्रकिरण इव सूर्य इव सप्त पत्राणि वाहनानि यस्मिन् तादृशः स्यन्दनः रथः तेन उपेतः। ("पत्रं वाहनपक्षयोः" इत्यमरः) पक्षे—सप्तपर्णो विषमच्छदः। स्यन्दनास्तिनिशः। ("सप्तपर्णो विशालत्वक् शारदो विषमच्छदः"। "तिनिशे स्यन्दनो नेमिः" इत्युभयत्राप्यमरः) विरूपाक्ष इव शिव इव सन्निहितो गुहः कार्त्तिकेयो यस्य सः, शिवया पार्वत्या अनुगतश्च। पक्षे—सन्निहिता गुहा गह्वरं यस्य सः, शिवाभिधानाभिः क्रोष्ट्रीभिश्च अनुगतश्च। ("शिवा गौरी शिवा क्रोष्टा भवेदामलकी शिवा" इति शाश्वतः। "देवखातबिले गुहा गह्वरम्"। "शिवा गौरीफेरवयोः" इत्युभयत्राप्यमरः) श्रीपर्वत इव सन्निहितो मल्लिकार्जुनो यस्य सः, मल्लिकार्जुनो नाम हरः। पक्षे—सन्निहितो मल्लिकाऽर्जुनो यस्य सः। ("हंसयुग्मे मल्लिकायां त्रिषु स्यात् केतकीफले" इति विश्वमेदिन्यौ। "नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः) कामीव कामुक इव कान्तानां रोचरसाभ्यामनुगतः, समदनश्च। पक्षे—कान्तारमूषरमा ऊषरभूमिस्ताभ्यामनुगतः, समदनः सधुस्तूरः। ("कान्तारं वर्त्म दुर्गमम्"। "ऊषवानूषरो द्वावप्यन्यलिङ्गौ"। "धुस्तूरः कनकाह्वयः। मातुलो मदनश्च" इति विश्वप्यमरः) नरवाहनदत्तस्तन्नामको राजा तद्वत् प्रियङ्गु-श्यामया तन्नामकस्त्रिया सनाथः। पक्षे—प्रियङ्गुः फलिनी, श्यामा रोचनी। ("प्रियङ्गुः फलिनी फली"। "विभाण्डी रोचनी श्यामा" इति द्वयोरप्यमरः) "गीतविधारा" इति ख्यातम्। शिशुरिव बालक इव कृता धात्र्या आमलक्या धृतिरवस्थानं येन सः। पक्षे—धात्र्युपमाता। ("धात्री स्यादुपमाताऽपि" इत्यमरः) वासरारम्भ इव गैरिकारुणप्रभया पाटलिता वनराजिर्वनपरम्परा जलधृतिर्वा यस्य सः।

बहुलतागहनः, कर्ण इवानुभूतशतकोटिदानः, भीष्म इव शिखण्डिमुक्तार्धचन्द्रैराचितः, कामसूत्रविन्यास इव मल्लनागघटितः कान्तारसामोदश्च, हिरण्यकशिपुरिव शम्बरकुलाश्रयः, गैरिकव्याजाद्रविरथमार्गमार्गणार्थमिवारुणेनोपास्यमानः, शिखरगतसूर्याचन्द्रमस्तया विस्तारितलोचनोऽगस्त्यमार्गमिवोदीक्षमाणः, स्रस्तान्त्रजाल इव जरदजगरभोगैः, कुम्भकर्ण इव

("अव्यक्तरागस्त्वरुणः"। "श्वेतरक्तस्तु पाटलः" इति द्वयोरप्यमरः) गैरिकवदरुणस्य सूर्यसूतस्य प्रभा यया ("सूरसूतोऽरुणोऽनूरुः" इत्यमरः) कृष्णपक्ष इव बहुलता कृष्णता तया गहनः। [भावे तल्] "बहुलः कृष्णपक्षेऽग्नौ शितौ च बहुला गवि" इति विश्वप्रकाशः। कोपि शितौ कृष्णे। पक्षे—बहुलताभिर्गहनः सान्द्रः। ("वल्ली तु व्रततिर्लता" इत्यमरः) कर्ण इवानुभूतं शतकोटीनां तत्सङ्ख्याकधनानां दानं वितरणं येन सः। पक्षे—अनुभूतं शतकोटिना वज्रेण दानं खण्डनं छेदनं येन स तादृशः। [दो अवखण्डने] ("शतकोटिः स्वरुः शम्बः" इत्यमरः) भीष्म इव शान्तनव इव शिखण्डिमुक्तैरर्धचन्द्रैरर्धचन्द्राख्यैर्बाणैराचितो व्याप्तः। पक्षे—शिखण्डो बर्हं तदस्ति येषां ते शिखण्डिनो मयूरास्तन्मुक्तैरर्धचन्द्रैरर्धमेचकाख्यैः पक्षैः आचितः। अर्धचन्द्रेण तदाकारयुक्ता लक्ष्यन्ते। ("शिखण्डस्तु पिच्छबर्हे नपुंसके"। "समौ चन्द्रकमेचकौ" इति द्वयोरप्यमरः) कामसूत्रविन्यास इव मल्लनागेन मुनिविशेषेण, पक्षे—गजविशेषेण घटितो रचितो युक्तश्च। ("मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि" इति विश्वप्रकाशः) कान्तारसामोदो शृङ्गाररसामोदो येन स तादृशः। पक्षे—कान्तारे दुर्गवर्त्मनि कानने वा सामोदोऽतिसुगन्धः। हिरण्यकशिपुरिव शम्बरो दैत्यविशेषस्तत्कुलाश्रयः। पक्षे—शम्बरो हरिणविशेषो जलं वा द्रव्यं वा। ("रङ्कुशम्बररौहिषाः"। "नीरक्षीराम्बुशम्बरम्" इत्युभयत्राप्यमरः। "शम्बरं सलिले वित्ते बौद्धव्रतविशेषयोः। शम्बरो दैत्यहरिण-मत्स्यशैलजिनान्तरे॥" इति विश्वप्रकाशः) गैरिकव्याजाद्रविरथमार्गस्य मार्गणार्थमन्वेषणार्थमिवारुणेनानूरुणोपास्यमानः। [मृग अन्वेषणे] शिखरगतसूर्याचन्द्रमस्तया ["देवताद्वन्द्वे च" इत्यानङ्] विस्तारितलोचनो विकासितनेत्रोऽगस्त्यमार्गमुदीक्षमाण इव; यावदहमागच्छामि तावत् त्वमुपविशेत्युक्त्वा गतो मुनिरायाति न वेति मार्गावलोकनमिति पुराणप्रसिद्धम्। जरदजगरभोगैर्वृद्धशयुशरीरैः स्रस्तान्त्रजालो विगलितान्त्रसमूह इव। ("अन्त्रं पुरीतत्"। "अजगरे शयुर्वाहस

दन्तान्तरालगतवानरव्यूहः, पिष्टालक्तकरागाङ्कितपादपङ्क्ति-सूचित-सञ्चरित--शचीपतिवारविलासिनीसङ्केत--केतकीमण्डपः, अकुलीनोऽपि सद्वंशभूषितः, दर्शिताभयोऽपि मृत्युफलदायी, सप्रस्थोऽप्यपरिमाणः, सनदोऽपि निःशब्दः, भीमोऽपि कीचक-सुहृत्, पिहिताम्बरोऽप्युल्लसदंशुको विन्ध्यो नाम महागिरि-रदृश्यत।

---

इत्युभौ" इति द्वयोरप्यमरः) कुम्भकर्ण इव दन्तान्तराले दशनान्तराले गतो वानरव्यूहो यस्य स तादृशः। पक्षे—दन्तः कटकः सानुतिर्यग्विनिर्गतः शिलाविशेषो वा, तदन्तरालगतवानरयूथः। ("दन्तो गिरिनितम्बे च दशने सानुनि स्मृतः" इति विश्वः। "दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निःसृता गिरेः" इति हेमः) पिष्टी-भूतमलक्तकं पिष्टालक्तकं तद्रागेणाङ्कितानां पादानां चरणानां पङ्क्तिभिः परम्पराभिः सूचितं सञ्चरितं सञ्चरणं येषु [भावे क्तः] तादृशाः शचीपति-वारविलासिनीनामुर्वश्यादीनां सङ्केतकेतकीमण्डपा यस्मिन् सः। विरोधाभासे-नाह—अकुलीनोऽपि निन्द्यगोत्रोऽपि सद्वंशेनोत्तमकुलेन भूषितो मण्डित इति विरोधः; कौ पृथिव्यां लीनोऽकुलीनोऽत्युच्चत्वात्, शोभनैर्वंशैर्वेणुभिरलङ्कृत इति परिहारः। दर्शितमभयं येन सः, मृत्युजनकं फलं दातुं शीलमस्य तादृश इति विरोधः; दर्शिता अभया हरीतकी येन सः, मृत्युफलं महाकालफलं कदलीफलं वा दातुं शीलमस्य तादृगिति परिहारः। ("अभया त्वव्यथा पथ्या" इत्यमरः। "मृत्युफलं महाकाले कदल्यां मृत्युफल्यपि" इति विश्वः) सप्रस्थः परिमाणविशेष-विशिष्टः, अपरिमाणः परिमाणरहित इति विरोधः। ("कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्" इत्यमरः) सप्रस्थः ससानुरित्यविरोधः। ("स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः)। नदेन शब्देन सहितः सनदो निःशब्द इति विरोधः। [णद अव्यक्ते शब्दे] नदेन शोणाख्यनदेन सहितो निःशब्द इत्यविरोधः। भीमोऽपि युधिष्ठिरानुजोऽपि कीचकसुहृत् तन्नामविराटराजश्यालकसुहृत्, विराटगृहावस्थितः कीचकः पाञ्चाल्यां साभिलाष इति भीमेन हत इति भारते प्रसिद्धमिति भीमस्य कीचकसुहृत्त्वं विरोधः; भीमो भयानकः, कीचका वंशविशेषास्तेषां सुहृत्। ("वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः) पिहिताम्बरश्छादितवस्त्रः, उल्लसत् स्फुरमाणमंशुकं वस्त्रं यस्य स इति विरोधः। ("चेलं वसनमंशुकम्" इत्यमरः) पिहितमाच्छादितमम्बरमाकाशो येन सः; उल्लसन्तः स्फुरमाणा अंशवः प्रकाशकाः

यश्च प्रवृद्धगुल्मतयेव दृश्यमानबहुधातुविकारः, साधुरिव सानुग्रहप्रचारप्रकटितमहिमा, मीमांसान्याय इव पिहित-दिगम्बरदर्शनः ।

यश्च हरिवंशैरिव पुष्करप्रादुर्भावरमणीयैः, राशिभिरिव मीनमिथुनकुलीरसङ्गतैः, करणैरिव शकुनि-नाग-भद्र-बालव-कुलोपेतैर्देवखातैरुपशोभितोपान्तः ।

---

किरणा यस्य सः इति परिहारः । [स्वार्थे कः] ("अम्बरं व्योम्नि वाससि ।" "किरणोस्रमयूखांशुः" इत्युभयत्राप्यमरः) ।

श्लेषमाह—यो विन्ध्यः प्रवृद्धगुल्मतया प्रवृद्धस्तम्बतयैव दृश्यमानो बहुधातूनामनेकगैरिकादीनां विकारो यत्र तादृक् । ("अप्रकाण्डे स्तम्बगुल्मौ" । "धातुर्मनःशिलाद्यद्रेः" इत्युभयत्राप्यमरः) पक्षे—प्रवृद्धगुल्मतया प्रवृद्धप्लीहतया दृश्यमानो बहुधातूनां रसादीनां विकारो यस्य सः । ("गुल्मस्तु प्लीहा पुंसि" इत्यमरः । "रसासृङ्मांसमेदोऽस्थि-मज्जशुक्राणि धातवः । सप्तैव दश चैकेषां रोमत्वक्स्नायुभिः सह ॥" इति हैमः । मता इति शेषोऽत्र ) साधुरिव सानुग्रहः सकृपः प्रचारश्चरणं तेन प्रकटित उद्योतितो महिमा स्वोत्कर्षो येन सः । पक्षे—सानुषु शिखरेषु ग्रहाणां सूर्यादीनां प्रचारेण भ्रमणेन प्रकटितो महिमौन्नत्यं येन सः । मीमांसान्याय इव तच्छास्त्रमिव पिहितं तिरोहितं दिगम्बरदर्शनं दिगम्बरमतं येन सः । पक्षे—पिहितं छादितं दिगम्बरयोर्दिशाकाशयोर्दर्शनं येन सः ।

यो विन्ध्यो देवखातैरुपशोभितोपान्त इत्यन्वयः । हरिवंशैरिव पुष्करप्रादुर्भावाख्यानविशेषवत्त्वेन, पक्षे—पुष्कराणां कमलानां जलानां वा प्रादुर्भावेण रमणीयैः । ("सहस्रपत्रं कमलं पुष्कराम्भोरुहाणि च" । "सलिलं कमलं जलं पुष्करं सर्वतोमुखम्" इत्युभयत्राप्यमरः) राशिभिरिव ज्योतिःशास्त्रप्रसिद्धैर्मेषादिराशिभिरिव मीनो मिथुनं कुलीरः कर्कटस्तैः सङ्गतैः । पक्षे—मीनमिथुनं कुलीराश्च तैः सङ्गतैः । करणैरिव ज्योतिषागमविदितैर्बवादिकरणैरिव शकुनि-नाग-भद्र-बालवानां तत्संज्ञकानां कुलैः समुदायैरुपेतैः । पक्षे—शकुनिः पक्षी नागो गजः सर्पो वा भद्रो मुस्ता बाल-बकुलौ बपुकेसरः, अथवा—बालं ह्रीबेरं बकुलः केसरस्तैरुपेतैः । ("शकुनि-पक्षिशकुन्ति-शकुन्तशकुनद्विजाः" । "मुस्ता मुस्तकमस्त्रियाम् । स्याद्भद्रमुस्तकः" । "बालं ह्रीबेरबर्हिष्ठोदीच्यम्" । "अथ केसरे बकुलः" इति चतुर्ष्वप्यमरः) ।

यश्च कुसुमविचित्राभिः, वंशपत्रपतिताभिः, सुकुमार-ललिताभिः, पुष्पिताग्राभिः, शिखरिणीभिः, प्रहर्षिणीभिर्लताभिर्दर्शितानेकवृत्तविलासः।

यश्च मदकलकलहंससारसरसितोद्भ्रान्तभाःकूटविकटपुच्छच्छटाव्याधूतविकच-कमलखण्डविगलित-मकरन्दबिन्दुसन्दोह-सुरभितसलिलया, सायन्तनमज्जन-पुलिन्दराजसुन्दरी-नाभि-मण्डलनिपीतसलिलया, मदमुखरराजहंसकुलकोलाहलमुखरितकूलपुलिनया, तटनिकटमत्तमातङ्गगण्डपिण्डविनिर्गतमद-धारास्तबकितसलिलया तीरप्ररूढ-केतकीकानननिपतित-

---

यो विन्ध्यो लताभिर्दर्शितानेकवृत्तविलास इति सम्बन्धः। कुसुमैर्विचित्राभिः वंशपत्रेषु पतिताभिः सुकुमाराश्च ललिताश्च ताभिः पुष्पितानि सञ्जातपुष्पाण्यग्राणि यासां ताभिः शिखरिणीभिः शिखरमयं तद्वतीभिः शाखाभिरित्यर्थः, प्रहर्षिणीभिः प्रकर्षेण हर्षकारिणीभिः [अन्तर्भावितण्यर्थोऽत्र हृषिः]। पक्षे—तत्तदभिधानैश्छन्दोभिः। "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्"। "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी"। "नयसहितौ न्जौ कुसुमविचित्रा"। "कुमारललिता ज्सौ ग्"। "दिशि मुनि वंशपत्रपतितं भरनभनलगैः"।

पुनरनुप्रासेनाह—यो विन्ध्यो रेवयोपगूढ इत्यन्वयः। मदेन कलमव्यक्तमधुरं कलहंसानां कादम्बानां सारसानां पुष्कराह्वानां रसितं शब्दस्तेनोद्भ्रान्ता भाःकूटा मत्स्यविशेषास्तेषां विकटपुच्छच्छटाभिर्व्याधूतविकचकमलखण्डाद्विगलितमकरन्दबिन्दु-सन्दोहेन सुरभितसलिलया। ("कादम्बः कलहंसः स्यात्"। "पुष्कराह्वस्तु सारसः" इत्युभयत्राप्यमरः। "भाःकूटः कथ्यते मीन-भेदे शैलान्तरेऽपि च" इति विश्वप्रकाशः। "भट्की" इति भाषायाम्) सायन्तने सायङ्कालिके ("सायं चिरम्" इत्यादिना ट्युल्तुडागमश्च) मज्जने पुलिन्दराजसुन्दरीणां शबराङ्गनानां नाभिमण्डलैर्निपीतसलिलया। मदमुखरराजहंसकुलस्य कोलाहलः कलकलस्तेन मुखरितं कूलपुलिनं यस्यास्तया। ("राजहंसास्तु ते चञ्चु-चरणैर्लोहितैः सिताः"। "कोलाहलः कलकलः"। "कूलं रोधश्च तीरं च"। "तोयोत्थितं तत् पुलिनम्" इति चतुर्ष्वमरः। कोषे तदित्यनेन तटम्) तटनिकटमत्त-मातङ्गगण्डपिण्डविनिर्गतमदधाराभिः स्तबकितं सञ्जातस्तबकं सलिलं यस्यास्तया।

धूलिनिकुरम्बजातसैकतसुखोपविष्टतरुणसुरमिथुननिधुवनलीलापरिमलसाक्षिकूलोपवनया, तटाटवीनिकटनिपतितजम्बूखण्डमण्डपावस्थितजलदेवताऽवगाह्यमानतोयया, तीरप्ररूढवेतसलताभ्यन्तरलीनदात्यूहव्यूहमदकलकुहकुहाऽऽरावकौतुकाकृष्टसुरमिथुनसंस्तूयमानाभोगया, उपकूलसञ्जातनलनिकुञ्जपुञ्जितकुलायकुक्कुटघटाघूत्कारभैरवतीरया, जलमानुषीमृदितसुकुमारतीरया, उपवनवातान्दोलिततरलतरङ्गया, नल-

("गण्डः कटो मदो दानम्" इत्यमरः) तीरप्ररूढकेतकीकाननान्निपतितधूलिनिकुरम्बं समूहस्तेन जातं यत् सैकतं तत्र या सुखोपविष्टतरुणसुरमिथुननिधुवनलीला तस्यां परिमलो विमर्दजन्यो जनमनोहरो गन्धस्तस्य साक्षि कूलोपवनं तीरस्थारामवनं यस्यास्तया। उपवनस्य परिमलसाक्षित्ववर्णनेन सर्वथा जनसञ्चाररहितत्वं ध्वन्यते। अत्र सैकतशब्दप्रयोगस्तत्सदृशे औपचारिकः। ("मैथुनं निधुवनं रतम्"। "विमर्दोत्थे परिमलो गन्धे जनमनोहरे"। "आरामः स्यादुपवनं कृत्रिमं वनमेव यत्" इति विश्वामरः) तटेऽटवी वनं तस्या निकटे निपतितानि जम्बूखण्डानि तेषां मण्डपेष्ववस्थितजलदेवताभिरवगाह्यमानतोयया। ("अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः) तीरप्ररूढवेतसलताऽभ्यन्तरलीनदात्यूहव्यूहः कालकण्ठकसमूहस्तस्य मदकलो यः कुहकुहाऽऽरावः कुहकुहशब्दस्तेन कौतुकं तदाकृष्टसुरमिथुनैः संस्तूयमान आभोगः परिपूर्णता यस्यास्तया। ("दात्यूहः कालकण्ठकः"। "आरवारावसंरावविरावाः"। "आभोगः परिपूर्णता" इति विश्वामरः)। उपवनोपभोग इत्यपि पाठः। उपकूलं [सामीप्येऽव्ययीभावः] तत्र सञ्जातो नलनिकुञ्जो लतादिच्छादितो देशस्तत्र पुञ्जितः पुञ्जवदाचरितोऽनेक इत्यर्थः, कुलायो नीडं यस्याः सा चासौ कुक्कुटघटा कुक्कुटसमूहस्तस्या घूत्कारेण तादृशशब्देन भैरवं भयानकं तीरं यस्यास्तया। "शैलोपशल्यनिपतद्रथनेमिधारा" इत्यादौ उपशल्यशब्दस्यान्ते इवात्र घटाशब्दस्य समुदाये प्रयोगो भाक्तः। ("नडस्तु धमनः पोटगलः"। "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे"। "कुलायो नीडमस्त्रियाम्"। "कुक्कुटश्चरणायुधः"। "अथ भैरवम्। दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्" इति पञ्चस्वप्यमरः) जलमानुषीमृदितसुकुमारतीरया, जलमानुषवज्जलमानुषः प्राणिविशेषः। ["जातेरस्त्री विषयात्" इति ङीष्] उपवनवातान्दोलिततरलतरङ्गया। एतेनास्य

निकुञ्जपुञ्जनिविष्टावकोटककुटुम्बिनीनिरीक्ष्यमाणाङ्गशफरया,
पोताधानलुब्धकोयष्टिकस्कम्भनभीमवेतसवनया, तरलतरङ्ग-
मालासञ्चरदुद्दण्डपालदर्शनधावदतिचपलराजिलराजिरञ्जितोप-
कूलसलिलया, कर्णाटीरमिथुनमैथुनदर्शनोपजातनिधिग्रहण-
कौतुक-किरातशतखन्यमानतीरया, क्रुद्धयेव दर्शितमुखविभङ्गया,
मत्तयेव स्खलितगत्या, दिनारम्भलक्ष्मीरिव वर्द्धमानवेलया,
भारतसमरभूम्येव नृत्यत्कबन्धया, प्रावृषेव विजृम्भमाणशतपत्र-

---

याते गुणत्रयं वर्णितम्; तेन कामिनां सर्वदा सुखकारिताऽस्य ध्वनिता।
जलनिकुञ्जपुञ्जे निविष्टोऽवकोटको बकस्तत्कुटुम्बिनी स्त्री तया निरीक्ष्यमाणो-
ऽङ्गशफरो दण्डपालो यस्यां तथा। ("बकोऽवकोटकश्चाथ बलाका तु बकी स्मृता"।
"दण्डपालोऽङ्गशफरः" इति द्वयोरपि हारावली) पोताधानं क्षुद्राण्डमत्स्यसङ्घातस्तत्र
लुब्धकोयष्टिकस्य टिट्टिभकस्य स्कम्भनं शब्दस्तेन भीमं वेतसवनं यस्यास्तया। [स्कम्भः
शब्दो धातूनामनेकार्थत्वाच्छब्दार्थः] ("क्षुद्राण्डमत्स्यसङ्घातः पोताधानम्"। "कोयष्टिक-
ष्टिट्टिभकः" इति द्वयोरप्यमरः) तरलतरङ्गमालायां सञ्चरदुद्दण्डपालो मत्स्यविशेष-
स्तद्दर्शनेन धावदतिचपला या राजिलराजिर्डुण्डुभसमूहस्तेन रञ्जितमुपकूलसलिलं
यस्यास्तया। ("भवेदुद्दण्डपालस्तु सर्पमत्स्यप्रभेदयोः" इति विश्वप्रकाशः। "समौ
राजिलडुण्डुभौ" इत्यमरः) कर्णाटीरः खञ्जनस्तन्मिथुनमैथुनदर्शनेनोपजातं निधिग्रहण-
कौतुकं येषां तादृक्किरातानां शतेन खन्यमानतीरया। ("कर्णाटीरः। खञ्जरीटस्तु
खञ्जनः" इति हारावली। "कौतूहलं कौतुकं च"। "भेदाः किरातशबर-पुलिन्दा
म्लेच्छजातयः" इति द्वयोरप्यमरः) तथा च वराहमिहिरः,—"तस्मिन् निधिर्भवति
मैथुनमेति यस्मिन् यस्मिन् पुनर्वमति तत्र तलेऽस्ति काचः। अङ्गारमप्युपदिशन्ति
पुरीषणेऽस्य तत्कौतुकाय नयनस्य खनेद्धरित्रीम्॥" इति। वसन्तराजोऽपि—
"अङ्गारखण्डं किल भूमिभागे तस्मिन् भवेत् यत्र करोति विष्ठाम्। यत्राथवा खञ्जनकौ
विधत्ते रतं भवेत् तत्र महानिधानम्॥" इति। क्रुद्धयेव दर्शितो मुखस्य
वदनस्य विभङ्गः कोपभ्रुकुटीविकारादिर्यया। पक्षे—मुखविभङ्गो निःसरण-
तरङ्गो यया। ("मुखं निःसरणास्ययोः" इति धरणिः। "भङ्गस्तरङ्ग ऊर्मिर्वा" इत्यमरः)
मत्तयेव स्खलिता गतिर्यस्यास्तया। पक्षे—स्खलिता तिर्यक् गतिः प्रवाहो
यस्यास्तया। दिनारम्भलक्ष्मीरिव वर्द्धमाना वेला कालो यस्यां तथा। पक्षे—

पिहितविषधरया, धनकामयेव कृतभूभृत्सेवया, रेवया प्रियतमयेव प्रसारितवीचिहस्तयोपगूढः।

यथ—

हरिखरनखरविदारितकुम्भस्थलविकलवारणध्वानैः।
अद्यापि कुम्भसम्भवमाह्वयतीवोच्चतालभुजः॥

ततो मकरन्दस्तमुवाच,—

"पश्योदञ्चदवाञ्चदञ्चितवपुः पश्चार्द्धपूर्वार्द्धभाक्
स्तब्धोत्तानितपृष्ठनिष्ठितमनागभुग्नाग्रलाङ्गूलभृत्।
दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन् सटामुत्कटा-
मुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी॥

---

वेला मर्य्यादा, ("अब्धाम्बुविकृतौ वेला कालमर्य्यादयोरपि" इत्यमरः)। भारतसमरभूम्येव नृत्यत्कबन्धमपमूर्द्धकलेवरं यस्यां तथा; पक्षे—कबन्धं जलं, ("कबन्धं सलिले रुद्रे कबन्धो राहुमालरे" इति विश्वः। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः)। प्रावृषेव विजृम्भमाणैः शतपत्रैर्मयूरैः, पिहिताः मयूरभक्षणभयादितस्ततश्छन्नाः, विषधराः सर्पा यस्यां तथा; ("शतपत्रः शितापाङ्गः प्रचलाकी च चन्द्रकी" इति हारावली) पक्षे—विजृम्भमाणशतपत्रैः कुशेशयैः, पिहिताश्छन्नाः, विषधराः जलधरास्तडागादयो यस्यां तथा, ("शतपत्रं कुशेशयम्" इत्यमरः। "विषं क्ष्वेडे जलेऽपि च" इति विश्वः)। धने द्रव्ये, कामोऽभिलाषो यस्यास्तयेव, कृता भूभृतो राज्ञः, पक्षे—विन्ध्यस्य, सेवा यया। प्रसारितवीचिहस्तया प्रियतमयेवोपगूढः।

हरीति।—यो विन्ध्यः, उच्चताल एव भुजो यस्य सः तादृशः, हरिखरनखरविदारितकुम्भस्थलविकलवारणध्वानैरद्यापि कुम्भसम्भवम् अगस्त्यम्, आह्वयतीवागच्छागच्छेत्याह्वानं, करोतीवेत्यर्थः, ("कुञ्जरो वारणः करी"। "अगस्त्यः कुम्भसम्भवः" इति द्वयोरप्यमरः)। उत्प्रेक्षालङ्कारः। आर्य्या वृत्तम्।

ततो गिरिदर्शनोत्तरं, मकरन्दस्तं कन्दर्पकेतुम्, उवाच।

स्वभावोक्त्याऽऽह, पश्येति।—उदञ्चदुत्तिष्ठत्, अवाञ्चदधोगच्छत्, अञ्चितं वपुः पश्चार्द्धपूर्वार्द्धे भजति इति तादृक्, ["अपरस्यार्द्धे पश्चभावो वक्तव्यः" इति पश्चादेशः] स्तब्धोत्तानितपृष्ठे निष्ठितं स्थितं तादृक्, मनागीषत्, भुग्नमग्रमस्य

अपि च—

उत्कर्णोऽयमकाण्डचण्डिमपटुः स्फारस्फुरत्केसरः
क्रूराकारकरालवक्त्रविकटः स्तब्धोर्द्ध्वलाङ्गूलभृत्।
चित्रेणापि न शक्यतेऽभिलिखितुं सर्वाङ्गसङ्कोचनात्
चोत्कुर्वन्गिरिकुञ्जकुञ्जरशिरःकुम्भस्थलस्थो हरिः" ॥

अनन्तरं नीचदेशनद्येव न्यग्रोधोपचितया, उत्तरगोग्रहसमरभूम्येव विजृम्भमाणबृहन्नलया, मरुदेशढक्कायात्रयेव घनसारसार्थवाहिन्या, विदग्धजनमधुपानगोष्ठ्येव नानाविटपीतासवया, नलकूबरचित्तवृत्त्येव सततधृतरम्भया, मत्तमातङ्गगत्येव घण्टारवावेदितमार्गया, सदोश्वरसेवयेवादूरीकृतबहुफलया, विराटलक्ष्म्येवानन्दितकीचकशतया, विन्ध्याटव्या कतिचित् पदानि गत्वा कामिन इव मदनशलाकाङ्कितस्य जम्बूवृक्षस्य शीतलच्छायायां विशश्राम।

---

तादृक्, लाङ्गूलं पुच्छः, तं बिभर्त्ति इति तादृक्, दंष्ट्राकोटिभिर्विशङ्कटं बृहत्, आस्यकुहरं मुखगर्भो यस्य तादृक्, उत् ऊर्द्धौ, कर्णौ यस्य सः तादृशः, सटामुत्कटां कुर्व्वन् क्रूराकृतिः केसरी सिंहः, वारिपतौ गजवरे, क्रमं पादविन्यासं, कुरुते पश्य; ["पश्य मृगो धावति" इत्यादाविवात्र क्रियायाः कर्मत्वम्] ("पुच्छोऽस्त्री लूमलाङ्गूलम्"। "विशङ्कटं पृथु बृहत्" इति द्वयोरप्यमरः। "सटा जटाकेसरयोः" इति हैमः)। स्वभावोक्तिरलङ्कारः, "स्वभावोक्तिस्तु तस्यैव जात्यादिस्थस्य वर्णनम्" इति लक्षणात्। शार्द्दूलविक्रीडितं वृत्तम्; "सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्द्दूलविक्रीडितम्" इति लक्षणात्।

उत्क्रममाणं वर्णयित्वा क्रान्तगतं वर्णयति, उत्कर्ण इति।—उत्कर्णः, अकाण्डचण्डिमपटुः, स्फारं बहु, स्फुरन्तः केसरा यस्य तादृशः, क्रूराकारं करालं वक्त्रं मुखं, तेन विकटो भयानकः, स्तब्धं निश्चलम्, ऊर्द्ध्वमुत्थितं, लाङ्गूलं बिभर्त्ति तादृक्, चोत्कुर्व्वन्, गिरिकुञ्जकुञ्जरशिरःकुम्भस्थलस्थोऽयं पुरोवर्त्ती, हरिः सिंहः, सर्वाङ्गसङ्कोचनाच्चित्रेणाप्यभिलिखितुं न शक्यते। अत्र शिरःपदमधिकम्। ("हरिर्हयसिंहयोः सूर्य्य-शक्रेषु वशुक्रद्रुमे। पुन्नागवृक्षे किञ्जल्के केसरः स्यात्" इति हैमः)।

अत्रान्तरे भगवानपि मरीचिमाल्यातपक्लान्तमत्तमद्विष-

---

अनन्तरं सिंहावलोकनानन्तरं, विन्ध्याटव्या विन्ध्यारण्येन, कतिचित् पदानि गत्वा कामिन इव मदनशलाकाऽङ्कितस्य जम्बूवृक्षस्य शीतलच्छायायां विश्रामित्यन्वयः। ("मदनशलाका सारिका पाठशालिनी" इति हारावली) पक्षे—मदनशलाका कामोद्दीपको वर्णिविशेषः, ("मदनशलाका कामी सिद्धौषधमप्ययं वदति" इति गर्गः। "स्यान्मदनशलाकाऽपि सार्यां कामोदयौषधौ" इति विश्वप्रकाशः) नवपल्लवमिति केचित्। नीचैर्गमनेनैव निम्नभागगमनेनैव, न्यग्रोधोऽधःप्रदेशावरोधनं, तेनोपचितया वृद्धया; पक्षे—न्यग्रोधैर्वटैः, उपचिता तया, ("न्यग्रोधो बहुपाद्वटः" इत्यमरः)। उत्तरगोग्रहसमरभूम्येव विजृम्भमाणो बृहन्नलोऽर्जुनः यस्यां तथा; ("उत्तरस्तु विराटस्य तनये दिशि चोत्तरे" इति विश्वप्रकाशः) पक्षे—बृहन्नलो धमनश्च यस्यां तया। ढक्काया ढक्काध्वनेः, यात्रा गमनं ढक्कायात्रा, मरुदेशस्य ढक्कायात्रा तथैव, घनो मेघः, तत्सारः पानीयं, तदर्थं सार्थः समूहः, तद्दायिनी तत्प्रापिका तया; यद्वा—ढक्काध्वनेन तद्ध्वनिः, सा चासौ यात्रा उत्सवः तथैव; तदुक्तमुदकं कूपादिस्थबहुपस्तस्याः; अन्यत् पूर्ववत्; ("गमनोत्सवयोर्यात्रा" इति विश्वः) मरुदेशे जलार्थिनो ढक्काध्वनिश्रवणाज्जलसमुद्धतमम्भोरिति निश्चय प्रयान्तीति प्रसिद्धम्; पक्षे—घनसारः कर्पूरं, पुष्पफलहीनः क्षीरसमानाकारपत्रः वृक्षभेदो वा, ("घनसारस्तु कर्पूरे वृक्षभेदे जलेऽपि च" इति विश्वः) ढक्कयापेति त्वपपाठः। ["असंज्ञात्वात् ङ्यापोः संज्ञाच्छन्दसोः" इत्यत्वाप्रसक्तेः] विदग्धजनमधुपानगोष्ठीव नानाविटैरनेकपिङ्गैः, पीत आसवो मद्यं यस्यां तादृशया; ("पिङ्गः पाल्लविको विटः"। "मैरेयमासवः सीधुः" इति द्वयोरप्यमरः) पक्षे—नानाविटपिषु हतं जातम्, आसवं लाक्षादिकं यस्यां तया। नलकूबरः कुबेरपुत्रः, तस्य नर्त्तने सततं धृता रम्भा तन्नामिकाऽप्सरसो यया तादृश्या; ("अस्येत्यनुवृत्तौ" पुत्रस्तु नलकूबरः" इति कुबेरप्रकरणेऽमरः) पक्षे—सततं धृता रम्भा कदली यया, ("कदली वारणबुसा रम्भा मोचांऽशुमत्फला" इत्यमरः)। मत्तमातङ्गमस्येव घण्टाया रवः शब्दः, तेनावेदितमार्गया; पक्षे—घण्टारवा वृक्षभेदः, ("घण्टारवा तु शणपुष्पिका" इत्यमरः)। सदोत्थसैन्यैर्वा-दुर्गोद्धृतानि बहूनि बहुविधानि भूयांसि वा, फलानि यस्यां तया; पक्षे—अदूरं श्रोत्रम्, उद्धृतानि बहूनि धनाद्यनिष्टनिवारणादीनि फलानि यस्यां तया। विराटसर्वांशावानन्दितं कीचकानां तच्छ्यालानां, शतं यया; पक्षे—कीचका वंशविशेषाः, ("वंशाः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः)।

लोचनपाटलमण्डलस्चरमाचलशृङ्गमारुरोह। ततो मकरन्दः फलमूलान्यादाय कथं-कथमपि तमभिनन्दिताहारपरिचयमकार्षीत्, स्वयं च तदुक्तशेषमशनमकरोत्।

अथ तामिव प्रियतमां हृदयफलके सङ्कल्प तूलिकया लिखितामिवावलोकयन् निस्पन्दकरणग्रामः कन्दर्पकेतुर्मकरन्दविरचितपल्लवशयने सुष्वाप।

अथार्द्धयाममात्रावखण्डितायां यामवत्यां तत्र जम्बूतरुशिखरे शुकसारिकयोर्मिथः कलहायमानयोः कलकलं श्रुत्वा कन्दर्पकेतुर्मकरन्दमुवाच—"वयस्य! शृणुवस्तावदेतयोरालापम्" इति।

ततः सारिका प्रकोपतरलाक्षरमुवाच—"कितव! सारि-

---

चरमान्तरेऽस्मिन्नवसरे, आतपक्लान्तमत्तमहिषलोचनवत् पाटलो मण्डलो यस्य तादृक्, मरीचिमाली सूर्यः, चरमाचलशृङ्गमस्ताद्रिशिखरम्, आरुरोह। ("श्वेतरक्तस्तु पाटलः"। "अस्तस्तु चरमः क्ष्माभृत्" इति द्वयोरप्यमरः)। ततोऽस्तगमनोत्तरं, मकरन्दः फलमूलान्यादाय तं कन्दर्पकेतुम्, अभिनन्दिताहारपरिचयमकार्षीत्, स्वयं च तदुक्तशेषमशनमकरोत्।

अथ फलाशनोत्तरं, हृदयफलके हृदयपट्टे, सङ्कल्प तूलिकया कूर्चिकया, लिखितां तामिव स्वप्नदृष्टामेव, प्रियतमामवलोकयन् ध्याने पश्यन्, निस्पन्दकरणग्रामो निश्चलसकलेन्द्रियः, कन्दर्पकेतुर्मकरन्दविरचितपल्लवशयने सुष्वाप। ("अथ तूलिका कूर्चिका" इति हैमः)। नक्तन्नतकन्दमूलाशनपल्लवशयनशयनेन गिरौ तपश्चरणं ध्वनितम्।

गिरेः अथः फलदातृत्वं दर्शयति, अथेत्यादिना।—अथ शयनोत्तरम्, अर्द्धयाममात्रावखण्डितायां विभावर्य्यां तत्र जम्बूतरुशिखरे तस्मिन् जम्बूशाखे, मिथः कलहायमानयोः शुकसारिकयोः कलकलं श्रुत्वा कन्दर्पकेतुर्मकरन्दमुवाच। ("मिथोऽन्योऽन्यं रहस्यपि"। "द्वौ यामप्रहरौ समौ" इत्युभयत्राप्यमरः)। किमित्याह, वयस्येति।—वयस्यैतयोरालापं तावच्छृणुव इति।

ततः कलहानन्तरं, सारिका प्रकोपतरलाक्षरं [क्रियाविशेषणम्] उवाच—कितव!

काऽन्तरमन्विष्य समागतोऽसि ? कथमन्यथा रात्रिरियती तव ?" इति । तच्छ्रुत्वा शुकस्तामवादीत्—"भद्रे ! अपूर्वाऽस्य कथा मया श्रुता प्रत्यक्षीकृता च, तेनायं कालातिपातः" । अथ समुपजातकुतूहलया सारिकयाऽनुरुध्यमानः कथयितुमारेभे ।

"अस्ति सुधाधवलैः, बृहत्कथारम्भैरिव शालभञ्जिकोपेतैः, वृत्तैरिव समाधवकक्रीडितैः, करियूथैरिव समत्तवारणैः, सुग्रीवसैन्यैरिव सगवाक्षैः, बलिभवनैरिव सुतलसन्निवेशैः, वेश्मभिरुपशोभितम् ; धनदेनापि प्रचेतसा, अजापालेनापि

---

भर्तः !, सारिकाऽन्तरमन्विष्य, अन्वेषणेन तया सह सम्बन्धो लक्ष्यते ; समागतोऽसि ? अन्यथा सारिकाऽन्तरसम्बन्धाभावे, तवेत्यस्य तदागमने अन्वयः ; इयती रात्रिरिति । तच्छ्रुत्वा शुकस्तां सारिकाम्, अवादीत्—भद्रे ! अपूर्वा कथा श्रुता प्रत्यक्षीकृता च ; कथायाः अश्रवणस्य प्रत्यक्षासम्भवात् तदर्थभूतक्रियाया अपि प्रत्यक्षासम्भवात् तदाशया जना लक्ष्यन्ते ; तेनायं कालातिपातः मदागमनेऽतिकाल इत्यर्थः । अथ शुकवाक्यश्रवणोत्तरं, समुपजातकुतूहलया सारिकयाऽनुरुध्यमानः अथथादिना भूयो भूयोऽर्थ्यमानः, शुकः इति शेषः, कथयितुमारेभे ।

कुसुमपुरं नाम नगरमस्तीत्यन्वयः । कीदृग्वेश्मभिरुपशोभितम् ? सुधाधवलैः "चूर्ण" इति प्रसिद्धं लेपनद्रव्यं, ("सुधा लेपोऽमृतं स्नुही" इत्यमरः)। बृहत्कथा गुणाढ्यकृतिः, तदारम्भैरिव शालभञ्जिकोपेतैः शालभञ्जिका नायिकाविशेषः ; पक्षे—शालभञ्जिका पुत्तलिका, ("शालभञ्जी पाञ्चालिका च पुत्तलिका" इति हैमः)। वृत्तैरिव छन्दोभिरिव, समाधवकक्रीडितैः माधवकक्रीडितं नाम छन्दोविशेषः, "माधवकं भासलगाः" ; पक्षे—माधवकानां शिशूनां, क्रीडितानि तैः सहितानि तैः । करियूथैरिव समत्तवारणैः समत्तगजैः ; पक्षे—सनिर्यूहैः, ("मत्तवारणमिच्छन्ति दानक्लिन्नकरे द्विपे । महाप्रासादवीथीनां वरण्डे चाप्यपाश्रये ॥" इति विश्वप्रकाशः । "निर्यूहो मत्तवारणम्" इति वैजयन्ती । "मत्तालम्बोऽपाश्रयः स्यात् प्रग्रीवो मत्तवारणः" इति हैमः । "निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके" इति विश्वप्रकाशः )। सुग्रीवसैन्यैरिव सगवाक्षैः गवाक्षो वानरविशेषस्तत्सहितैः ; पक्षे—सगवाक्षैः सवातायनैः । बलिभवनैरिव सुतले पातालविशेषे, सन्निवेशो येषां तैः ; पक्षे—

रामेण, प्रियंवदेनापि पुष्पकेतुना, भरतेनापि शत्रुघ्नेन, तिथि-परेणाप्यतिथिसत्कारपरेण, असङ्ख्येनापि सङ्ख्यावता, अमर्म-भेदिनाऽपि वीरतरेण, अपतितेनापि नानासवासक्तेन, सुदर्शने-नाप्यचक्रेण, अजातमदेनापि सुप्रतीकेन, अपक्षपातिनाऽपि हंसेन, अविदितस्नेहक्षयेणापि कुलप्रदीपेन, अग्रन्थिनाऽपि वंश-पोतेन, निदाघदिवसेनेव वृषविवर्द्धितरुचिना, माघविराम-दिवसेनेव तपस्यारम्भिणा, अग्रहेणापि काव्यजीवज्ञेन, पौरजने-नानुगतम्; घनागमदिवसेनेव दर्शितखड्गाभ्रेण, वेलातटेनेव

शोभनस्तनसन्निवेशो येषां ते:। पौरजनेनानुगतमित्यन्वयः। धनदेनापि कुबेरेणापि, प्रचेतसा वरुणेनेति विरोधः; धनदो धनदाता, प्रकृष्टं चेतो यस्य स इत्यविरोधः। अजातकालो कावालः, रामः पशुविशेष इति विरोधः; केचित्तु जातकालो रामपूर्वजः, रामो दाशरथिरिति विरोधः; ("कावालः स्यादजाजीवः"। "रामः सृमरो गवयः शशः। इत्यादयो मृगेन्द्राद्याः" इत्युभयत्राप्यमरः) अकारो वासुदेवः, तस्माज्जातोऽङ्गजः कामः, तमापालयति तादृक्, अत एव रमयतीति रामः [ ण्यन्तात् पचाद्यच्, ततोऽण् ] स्त्रीणां क्रीडाकारकत्वादनेनेत्यविरोधः। प्रियंवदो गन्धर्वविशेषः, पुष्पकेतुः काम इति विरोधः; प्रियं वदतीति तादृक् तेन, ["प्रियवशे वदः खच्" इति खच्। "अरुर्द्विषत्" इति मुम्] पुष्पकेतुः पुष्पाभरणकेतनेनेत्यविरोधः। भरतः कैकेयीतनयः, शत्रुघ्नः सौमित्रिरिति विरोधः; भे नक्षत्रे रतेन ज्योतिषिकेण, शत्रुघातकेनेति परिहारः। तिथौ विहिततत्तिथिकर्मणि, परेण रतेन, न तिथिसत्कारपरोऽतिथि-सत्कारपर इति विरोधः; अतिथीनामागन्तूनां सत्कारपरेणेति परिहारः, ("आगन्तुरतिथिर्ना गृहागते" इत्यमरः)। असङ्ख्येन बहुत्वाद्गणनारहितेन, सङ्ख्यावता सङ्ख्यासहितेनेति विरोधः; असङ्ख्येनायुद्धेन, सङ्ख्यावता पण्डितेनेत्यविरोधः, ("मृधमास्कन्दनं सङ्ख्यम्"। "सङ्ख्यावान् पण्डितः कविः" इत्युभयत्राप्यमरः)। अमर्म-भेदिनाऽपि वीरतरेण काण्डेन, काण्डस्य मर्मभेदित्वं प्रसिद्धं, तद्विरहत्वेन वर्णनं विरोधः; ("अजिह्मगो वीरतरोऽस्त्रकण्टकः" इति हारावली) मर्म रहस्यं, तदभेदकेन, वीरतरेणातिशूरेणेति परिहारः। अपतितेन धर्मादपतितेन, नानासवासक्तेनानेक-मद्यासक्तेनेति विरोधः; ("मैरेयमासवः शीधुः" इत्यमरः) अपतितेनाप्रायश्चित्तार्हेण, नाना सवा अनेकयज्ञाः, तेष्वासक्तेनेति परिहारः, ("यज्ञः सवोऽध्वरो यागः"

प्रवालमणिमण्डितेन, देवाङ्गनाजनेनेवेन्द्राणीपरिचयविदग्धेन, वनगजेनेव पल्लवपल्लवितरुचिना, कोकिलेनेव परपुष्टेन, भ्रमरेणेव कुसुमेषु लालितेन, जलौकसेव रक्ताकृष्टिनिपुणेन, याजकेनेव सुरतार्थिना, महानटबाहुनेव भुजङ्गसङ्गेन, गरुडेनेव विलासिहृदयतापकरेण, अन्धासुरेणेव शूलानामुपरिगतेन, वेश्याजनेनाधिष्ठितं कुसुमपुरं नाम नगरम्।

---

इत्यमरः)। अजातशत्रुनामकेनाचरितेन, सुधर्मेणेन तन्नामकसभेनेति विरोधः; अजातलक्ष्मीनामकालाहङ्कारेण, सद्धर्मेण कृत्रैव यस्य तेनेति परिहारः, ("धर्मं प्रतोऽवयवः" इत्यमरः)। सुदर्शनेनापकान्त, विष्णुचक्रस्य सुदर्शन इति संज्ञेति विरोधः; अपकृष्टादर्शनेन, ("अभावे नमूढ च दर्प मदनयोर्द्वयोः" इति [illegible]) शोभन दर्शनं यस्येत्यविरोधः। न पक्षेण गरुडा, पक्षतीयवपाती तेन, [illegible] विरोधः; चक्रारे विष्णौ, पक्षपातो तादृशेन, इमेन विशुद्ध [illegible] परिहारः, ("चक्रारो वासुदेवः स्यात्" इत्यभिधानः। "हंसो विशुद्धनिर्लोभे [illegible] च विहगान्तरे" इति विश्वः)। न विदितः स्नेहस्य तैलस्य, चयो येन तेनापि कुलप्रदीपेनेति विरोधः; न विदितः स्नेहचयोऽनुरागचयो येन, कुलस्य वंशस्य, प्रदीपेन प्रकाशिनेति परिहारः। अपन्थिना पर्वरहितेन, वंशजेनेन वंशादुदितेनेति विरोधः; अपन्थिना गुडहृदयेन, वंशजेनेन सत्कुलाभिजेनेत्यविरोधः। [illegible]टिवर्त्मनेव वृषिण वपमनकुसुमेन, विवर्धितरुचिना प्रवृद्धतापेनेत्यर्थः; पक्षे—वृषं धर्मं, विवर्धितरुचिना। माघविरामदिवसेनेव तपस्यस्य फाल्गुनस्य, आरम्भिणा; ("स्यात् तपस्यः फाल्गुनिकः" इत्यमरः) पक्षे—तपस्या तपश्चरणं, तदारम्भिणा। अगरीणापि काव्यजीवज्ञेन गुरुगुरुवृधेन; पक्षे—काव्यस्य जीवज्ञेनाग्रज्ञेन। वेश्याजनेनाधिष्ठितमित्यन्वयः। घनागमदिवसेनेव दर्शितखण्डाभ्रेण दर्शितखण्डमेघेन; पक्षे—खण्डाभ्रं दन्तक्षतविशेषः, तथा च वामनः,—"विषमनीचपरिमण्डलं च यतः समन्तादिद्धदेरुपेतम्। खण्डाभ्रमेतद्दशनावलीखं बिम्बाधरोऽसङ्गविभूषणाय॥" इति। वेलातटेनेव प्रवाला विद्रुमाः, मणयश्च तैर्मण्डितेन; पक्षे—प्रवालैरुत्तमकैशैर्विद्रुमैर्वा, मणिभिर्मण्डितेन; यद्वा—प्रवालमणिर्दन्तक्षतविशेषः, तथा च वामनः,—"गाढं दन्तौष्ठसंयोगात् स प्रवालमणिर्भवेत्" इति। देवाङ्गनाजनेनेवेन्द्राणी शची, तस्याः परिचयाद्विदग्धेन; पक्षे—इन्द्राणी रतौ बन्धविशेषः, "निजचरणयुगलपलमानुभ्यां

यत्र च सुरासुरमौलिमालालालितचरणारविन्दा, शुम्भनिशुम्भमहावनदावज्वाला, महिषमहासुरगिरिवज्रसारधारा, प्रणयप्रणतगङ्गाधरजटाजूटस्खलितजाह्नवीजलधाराधौतपादपद्मा, भगवती कात्यायनी वेतालाभिधाना स्वयं प्रतिवसति ।

---

भवति चाभ्यासात् । इन्द्राणीरचितत्वादिन्द्राणीत्याख्यश्च बन्धः ॥" इति । वनगजेनेव पल्लवे किसलये, पल्लविता विवृद्धा, रुचिरिच्छा येन तेन ; पक्षे—पल्लवैः पल्लवेषु वा विटैर्विटेषु वा, विवर्द्धितरुचिना, ("पल्लवः किसलये विस्तृतौ विस्तारे विटपेऽपि च" इति विश्वः)। कोकिलेनेव परभृतात् पुष्टेन ; पक्षे—परमर्थं, पुष्टेन। भ्रमरेणेव कुसुमेषु पुष्पेषु, लालितेन ; पक्षे—कुसुमेषुणा कामेन, लालितेन। जलौकसेव रक्ताकृष्टिः रुधिराकृष्टिः, तत्र निपुणेन ; ("रक्तमसृक्शोणितम्" इत्यमरः) ["जलौकसेन" इति पाठे—पूर्वमौकःशब्दात् स्वार्थेऽण् पश्चात् समासः] पक्षे—रक्तानामनुरक्तानाम्, आकृष्टिषु निपुणेन। ("शाब्दिकैस्तु जलौकाभिः कथितोऽयं जलौकसः" इति शब्दभेदप्रकाशः)। याचकेनेव सुरता सुरत्वं, तदर्थिना ; [भावे तल्, "तलन्तं स्त्रियाम्" इति स्त्रीत्वम्] पक्षे—सुरतं निधुवनं, तदर्थिना। महानटबाहुनेव विषभुजेनेव, वल्लाङ्गनङ्गेन ; पक्षे—वल्लाङ्गविलासिना, ("भुजङ्गोऽहिविलासिनोः" इति विश्वः)। गरुडेनेव बिले भासितुमुपवेष्टुं शीलं येषां तेषां सर्पाणां, हृदयतापकरेण ; पक्षे—विलासिनां स्वामङ्गतिविलसनशीलानां, हृदयतापकरेण। अन्धासुरेणेव शूलानामुपरिगतेन ; [दारा इत्यादाविवात्रापि बहुत्वाभिप्रायेण बहुवचनम्] अन्धासुरो भैरवेण शूलाग्रे रोपित इति कथा ; पक्षे—शूलानामुपरिगतेन अन्यत्र स्थिताभ्यो वेश्याभ्योऽधिकेनेति भावः, ("शस्त्रे प्रहरणे शूलः केतने योगरोगयोः । शूलाटेऽस्य यथार्थाश्च कीलके पण्यशोषिति ॥" इति विश्वप्रकाशः)।

यत्र कुसुमपुरे, वेतालाभिधाना स्वयं प्रतिवसतीति सम्बन्धः। सुरासुरेति स्पष्टम्। शुम्भनिशुम्भावेव महावनं तस्य दावज्वाला दावाग्निशिखा, ("दवदावौ वनारण्यवह्नी" इत्यमरः)। महिषेति रूपकं, "विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्" इति लक्षणात्। प्रणयेन प्रीत्या, प्रणतो यो गङ्गाधरस्तस्य जटाजूटात् स्खलिता या जाह्नवीजलधारा तया धौतपादपद्मा ; एतेन न केवलं भर्त्तैव प्रणनाम, किन्तु सपत्न्याऽपि पादक्षालनमाचरितमिति ध्वनितं, तेनातिवल्लभत्वं ध्वनितम्।

यस्य च परिसरे सुरासुरमुकुटकुसुमरजोराजिपरिमलवाहिनी, पितामहकमण्डलुधर्मद्रवधारा, धरातलगतसगरसुतशतसुरनगरसमारोहणपुण्यरज्जुः, ऐरावतकटकषणकम्पिततटहरिचन्दनस्यन्दनसुरभितसलिला, सलीलसुरसुन्दरीनितम्बबिम्बाहतितरलिततरङ्गा, स्नानावतीर्णसप्तर्षिजटाटवीपरिमलपुण्यवेणिः, एणतिलकमुकुटजटाजूटविकटकुहरभ्रान्तिजनितसंस्कारतयेव कुटिलावर्त्ता, धरणीव सार्वभौमकरस्पर्शोपभोगक्षमा, जलदकालसरसीव गन्धान्धोपरिभ्रमद्भ्रमरमालाऽनुमीयमानजलमग्नकुमुदपुण्डरीका, छन्दोविचितिरिव मालिनीसनाथा, हतान्धतमसाऽपि तमसाऽन्विता, वीचिकलिताऽप्यवीचिदुर्गमा, भगवती भागीरथी वहति।

यस्य पुरस्य, परिसरे प्रान्ते, भागीरथी गङ्गा, वहतीति सम्बन्धः। सुरासुरेति। पितामहस्य ब्रह्मणः, कमण्डलोर्धर्मद्रवरूपा धारा। धरातलगतसगरसुतशतस्य सुरनगरसमारोहणार्थं पुण्यरज्जुः। ऐरावतस्य कटकषणेन गण्डस्थलघर्षणेन, कम्पिततटहरिचन्दनस्य स्यन्देन प्रस्रवणेन, सुरभितसलिला। सलीलं [क्रियाविशेषणं] सुरसुन्दरीनितम्बबिम्बाहतिभिस्तरलिततरङ्गा। स्नानावतीर्णसप्तर्षिजटाटव्याः परिमलपुण्यवेणिः पुण्यप्रवाहा। एणतिलकश्चन्द्रः, मुकुटे यस्य तस्य जटाजूटविकटकुहरे भ्रान्तिर्भ्रमणं, तेन जनितसंस्कारतयेव कुटिल आवर्त्ता जलभ्रमसङ्घतो, ("स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः)। धरणीव सार्वभौमश्चक्रवर्त्ती; पक्षे—सार्वभौम उत्तरदिग्गजः, तस्य करस्पर्शोपभोगक्षमा, उभयोरेकदिक्स्थत्वादिति भावः, ("स्पर्शः स्पर्शनदानयोः" इति विश्वः)। जलदकालसरसीव गन्धान्धोपरिभ्रमन्ती याऽसौ भ्रमरमाला तया अनुमीयमानानि जलमग्नकुमुदपुण्डरीकाणि यस्यां सा; पक्षे—कुमुदपुण्डरीकौ दिग्गजौ। छन्दोविचितिर्ग्रन्थविशेषः, तद्वन्मालिनी छन्दोविशेषः, तेन सनाथा; "ननमयययुतेयं मालिनी भोगिलोकैः"; पक्षे—मालिनीनामिका नदी। हतान्धतमसाऽपि नाशितान्धकाराऽपि, तमसा अन्धकारेण, अन्वितेति विरोधः; तमसानामिकया नद्या, अन्वितेति परिहारः। वीचिभिस्तरङ्गैः, कलिता व्याप्ताऽपि, न वीचिभिर्दुर्गमेति विरोधः; पक्षे—अवीचिर्नरकभेदः, ("तद्भेदास्तपनावीचिमहारौरवरौरवाः" इत्यमरः)।

यत्र दिशि दिशि तारागणमिव कुसुमनिकरमुद्वहद्भिः, उत्तम्भितजलदैः, अनूरुकरकशाभिघातपरवश-रविरथतुरगग्रास-विषमितपल्लवैः, चन्द्रचमूरुचरणसङ्क्रान्तामृतकणनिकरसेक-सञ्जातबहलसुकुमारनवकिसलयसहस्रदर्शिताकालसन्ध्याविभ्रमैः, भरतचरितैरिव सदा रामाश्रितैः, महावीरैरिव नारिकेली-धरैः, असंस्कृततरुणैरिवातिदूरप्रसारिताक्षैः, मत्तमातङ्गकुम्भ-स्थलदारणोद्यतसिंहैरिवोद्यतकेसरैः, सारिष्टैरपि चिरजीविभिः, उपवन-पादपैरुपशोभितम्, अदितिजठरमिवानेक-देव-कुला-ध्यासितं, पातालमिव महाबलिशोभितं भुजङ्गाधिष्ठितं च, सुरालयैरपि पवित्रं, भोगिभिरपि निरुपद्रवम्।

यत्र च सुरतभरखिन्नसुप्तसीमन्तिनीरत्नताटङ्कमुद्राङ्कित-बाहुदण्डाः, प्रचण्डप्रतिपक्षलक्ष्मीकेशपाशकुसुममालाऽऽमोद-

---

सम्बन्धातिशयोक्त्याऽऽह। उपवनपादपैरुपशोभितमित्यन्वयः। दिशि दिशीति स्पष्टम्। यत एवोत्तम्भितजलदैः। अनूरुरिति। ("अश्वादेस्ताडनी कशा" इत्यमरः)। शाखो भवकम्। शेषं स्पष्टम्। भरतचरितैरिव सदा रामाश्रितैः; पक्षे—सन् श्रेष्ठः, य आरामस्तदाश्रितैः। असंस्कृततरुणैरिवातिदूरं प्रसारिते अक्षिणी यैस्तैः, शठाचरणानभिज्ञत्वादिति भावः, [बहुव्रीहौ "सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति षच्] यद्वा—अतिदूरं प्रसारिता अक्षाः पाशकाः यैस्तैः; ("अक्षमिन्द्रिये। ना द्यूताङ्गे" इत्यमरः) पक्षे—अक्षा विभीतकाः, ("विभीतकः। नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः" इत्यमरः)। मत्तमातङ्गकुम्भस्थलदारणोद्यतसिंहैरिवोद्यतकेसरैरुद्धूतस्कन्ध-केशैः, जातिवर्णनमेतत्; पक्षे—केसराः हयाः, ("चाम्पेयः केसरो नागकेसरः" इत्यमरः)। सारिष्टैरपि मरणसूचकयोगविशेषसहितैरपि, चिरजीविभिः; पक्षे—सारिष्टैः फेनिलसहितैः, ("अरिष्टः फेनिलः समौ" इत्यमरः)। अदिति-जठरमिव देवमातुरुदरवत्, अनेकं देवकुलं देवसमूहः, तेनाध्यासितम्; पक्षे—देवकुलं देवगृहम्। सुरालयैर्मद्यगृहैरपि, पवित्रमिति विरोधः; सुरालयैर्देवगृहै-रित्यविरोधः। भोगिभिः सर्पैरपि, निरुपद्रवमिति विरोधः; भोगिभिः सुखिभि-रिति परिहारः।

सुरभितकरकमलः, प्रशस्तकेदार इव बहुधान्यकार्य्यसम्पादकः, शृङ्गारशेखरो नाम राजा प्रतिवसति।

यो बलभित् पावको धर्मराट् निर्ऋतिः प्रचेताः सदागतिः धनदः शङ्कर इत्यष्टमूर्त्तिरप्यनष्टमूर्त्तिः, पार्थ इव सुभद्रोपेतः सभीमसेनश्च, कृष्ण इव सत्यभामोपेतः सबलश्च।

सुराणां पाताऽसौ स पुनरतिपुण्यैकहृदया
ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः।
करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां
स सर्वस्वं दाता तृणमिव सुरेशं विजयते॥

---

अथ कुसुमपुरनामनगरे, शृङ्गारशेखरो नाम राजा प्रतिवसतीति सम्बन्धः। सुरतेति स्पष्टम्। प्रचण्ड इति स्पष्टम्, अनेन कथकपूर्वकमारभ्यन्ते: स्वायत्तीकृतेति ध्वनितम्। प्रशस्तकेदार इव विपुलक्षेत्रमिव, बहुधान्यकार्य्यसम्पादकः, ("पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्" इत्यमरः) पक्षे—बहुधा बहुप्रकारेण, अन्यकार्य्यसम्पादकः।

यः शृङ्गारशेखरः, बलभिच्छत्रुबलभेत्ता, पावकः पवित्रकर्त्ता, धर्मेण राजते धर्मराट्, निर्गता ऋतिः स्पर्द्धा यस्य तादृशः, ("ऋतिर्गतौ घृणायां च स्पर्द्धायां च शुभेऽपि च" इति रभसः) प्रकृष्टं चेतो यस्य स प्रचेताः, सताम् आ साकल्येन, गतिराश्रयो यस्मात् तादृशः, धनदो धनदाता, शङ्करः कल्याणकारी; पक्षे—बलभिदिन्द्रः, पावको वह्निः, धर्मराट् यमः, निर्ऋती राक्षसः, प्रचेता वरुणः, सदागतिर्वायुः, धनदः कुबेरः, शङ्करः शिवः, इत्यष्टमूर्त्तिरष्टगुणविशिष्टा मूर्त्तिरस्येत्यष्टमूर्त्तिरप्यनष्टमूर्त्तिः नाष्टौ मूर्त्तयोऽस्येत्यनष्टमूर्त्तिरिति विरोधः; अनष्टा मूर्त्तिरस्येत्यनष्टमूर्त्तिरिति परिहारः। पार्थ इवार्जुन इव, सुभद्रयोपेतः, भीमसेनेन सहितः सभीमसेनः; पक्षे—शोभनभद्रेण कल्याणेन युतः, भीमया सेनया सहितः। कृष्ण इव सत्यभामयोपेतः, सबलः सबलभद्रः; पक्षे—सत्यं च, भा च दीप्तिश्च, मा च लक्ष्मीश्च, ताभिर्युतः, सबलः ससैन्यः।

सुराणामिति।—असाविन्द्रः, सुराणां देवानां, पाता रक्षकः, मघव इत्यपि श्लेषमहिम्ना अर्थः, शृङ्गारशेखरः पुनरतिपुण्यं पवित्रम्, एकं हृदयं यस्येत्युत्कर्षः इन्द्रात्, तस्येन्द्रस्य, आस्थाने सभायां, गुरुर्बृहस्पतिः, ग्रहो ग्रहेषु पठितः, तस्य नृपस्य,

जीवाकृष्टिं स चक्रे मृधभुवि धनुषः शत्रुरासीद्गतासु-
र्लक्षप्राप्तिर्मार्गणानामभवदरिबले तद्यशस्तेन लब्धम् ।
मुक्ता तेन क्षमेति त्वरितमरिबलैरुत्तमाङ्गैः प्रतिष्ठा
पञ्चत्वं द्वेषिसैन्ये स्थितमवनिपतिर्नाप सङ्ग्रामान्तरं सः ॥

यत्र च राजनि राजनीतिचतुरे चतुरुदधिमेखलाया भुवो नायके शासति वसुमतीं पितृकार्ये वृषोत्सर्गः, शशिनः कन्यातुलारोहणं, योगे शूलव्याघातचिन्ता, दानच्छेदः करिकपोलेषु,

---

अस्थाने गुरुसंग्रहात्, ग्रहो निर्बन्ध इत्यर्थः, ("निर्बन्धोपरागार्कादयो ग्रहाः" इत्यमरः) स राजा, उचितमार्गे निरतः सक्तः, तथेन्द्रश्च, करी दक्षः, शतकोटिप्रणयितां वज्रप्रणयितां, वहति, ("शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः" इत्यमरः) शतकोटिसङ्ख्याकद्रव्यप्रणयिता साभिलाषतेति याचकपक्षेऽर्थश्च, स राजा, सर्वस्वं दाता, ["न लोका—" इति निषेधात् कर्मणि षष्ठी न] सुरेशमिन्द्रं, दर्पमिव विजयते, ["विपराभ्यां जेः" इत्यात्मनेपदम्] विरोधाभासोऽलङ्कारः। शिखरिणी छन्दः, "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी"।

जीवेति।—स शृङ्गारशेखरः, मृधभुवि धनुषो जीवायाः प्रत्यञ्चायाः, आकृष्टिमाकर्षणं, चक्रे, शत्रुर्गतासुरासीत ; धनुषो जीवाकृष्टिः शत्रोर्मरणमित्यसङ्गत्यलङ्कारः ; चपलातिशयोक्तिश्च। ("मौर्वी जीवा गुणो गव्या शिञ्जा बाणासनं गुणः" इति हैमः) अरिबले मार्गणानां लक्षप्राप्तिरभवत्, तेन राज्ञा, तेषामरीणां, यशो लब्धं, तेन राज्ञा, क्षमा क्षान्तिः, मुक्तेत्यरिबलैस्त्वरितमुत्तमाङ्गैः प्रतिष्ठा मुक्ता, द्वेषिसैन्येऽरिबले, पञ्चत्वं मृत्युः, स्थितं, ("स्यात् पञ्चता कालधर्मः" इत्यमरः) स राजा, सङ्ग्रामान्तरं युद्धान्तरं, न आप प्राप, एकस्मिन्नेव युद्धे रिपूणां नाशादिति भावः, ("मृधमास्कन्दनं सङ्ख्यम्" "लक्ष्यं लक्षं शरव्यं च" इति द्वयोरप्यमरः)। श्लेषोऽप्यत्र। स्रग्धरा छन्दः, "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।"

यत्र यस्मिन्, चतुरुदधिमेखलाया भुवो नायके राजनीतिचतुरे राजनि वसुमतीं पृथिवीं, शासति सति। परिसङ्ख्यया आह। पितृकार्ये वृषस्य नाम्नश्च अन्यस्य वा, उत्साहपूर्वकत्यागः, वृषो धर्मश्च, एवकारः सर्वत्र योज्यः। यद्यपि पदार्थान्तरेणापि परिसङ्ख्योपपद्यते, तथाऽपि वसन्ततिलकस्येव [illegible]-[illegible] पितृकार्यैकवर्णनमिति भावः। शशिन एव कन्या तुला च राशिः, तदा-

दक्षिणवामकरणं दिङ्निश्चये, शरभेदो दधिषु, शृङ्खलाबन्धो वर्ण-ग्रथनासु, उत्प्रेक्षाऽऽक्षेपः काव्यालङ्कारेषु, लक्षदानच्युतिः सायकानां क्रियां सर्वविनाशः, कोशसङ्कोचः कमलाकरेषु, जातिहीनता दुष्कुलेषु न पुष्पमालासु, शृङ्गारहानिर्जरत्करिषु न जनेषु, दुर्वर्णयोगः कटकादिषु न कामिनीकान्तिषु, गान्धारविच्छेदो रागेषु न पौरवनितासु, खसाभावो नीचसेवकेषु न परिजनेषु,

नारीहरणं, तृणाहरणयोग्यत्वात्मायाऽपराधिनोऽभावादिति भावः। योगे विष्कम्भादि-योगे एव, शूलव्याघातौ योगविशेषौ, तयोश्चिन्ता, न तु शूलेन व्याघातस्ताडनं, तस्य चिन्ता। करिकपोलेषु एव दानस्य मदस्य, विच्छेदः, न तु वितरणस्य विच्छेदः। दिङ्निश्चये एव दक्षिणवामकरणम् अस्मादयं दक्षिणोऽस्मादयं वाम इति, दक्षिण-वामौ हस्तौ पादौ कर्णौ वा, तयोः करणं छेदनं, [कृञ् हिंसायाम्। बाहुलका-द्भावे ल्युट्]। दधिष्वेव शरभेदः शरस्य दध्युपरिभागस्य, भेदो नाशः, न तु शरैर्बाणैर्भेदः। वर्णग्रथनास्वेव काव्यप्रतिबन्धविशेषेष्विव, शृङ्खलाबन्धः, न तु शृङ्खलया पादबन्धेन, बन्धः। काव्यालङ्कारेष्वेवोत्प्रेक्षाऽऽक्षेपः उत्प्रेक्षाऽऽक्षेपावलङ्कारौ, तदुक्तः शब्दो लक्ष्यते इत्येकवचनोपपत्तिः; उत्प्रेक्षा अनवधानं, तथा आक्षेपो निन्दा, सतोऽन्यत्र नास्ति, ("उत्प्रेक्षाऽनवधानेऽपि काव्यालङ्करणेऽपि च" इति विश्वः। "अवर्णाक्षेपनिर्वाद-परीवादापवादवत्" इत्यमरः)। सायकानामेव लक्ष्यस्य दानं खण्डनं, तस्य च्युतिः, न तु लक्षदानस्य वितरणस्य, च्युतिः। क्रियास्वेव सर्वविनाशः सर्वनाशः, [व्यक्त्यभिप्रायेण बहुवचनम्] न तु सर्वेषां वीनां पक्षिणां, नाशः। कमलाकरेष्वेव कोशस्य कुड्मलस्य, सङ्कोचः, न तु कोशस्य सङ्गृहीतधनस्य, सङ्कोचः। दुष्कुलेष्वेव जात्या सामान्येन, हीनता, न पुष्पमालासु, तत्र जातीनां तत्कुसुमानां, सत्त्वात्, ("जातिर्जातं च सामान्यम्" इत्यमरः)। जरत्करिष्वेव शृङ्गारहानिर्मण्डन-हानिः, न तु जनेषु शृङ्गारस्य रसस्य, हानिः, ("रसे नाट्ये च शृङ्गारः करि-मण्डन एव च" इति विश्वः)। कटकादिष्वाभरणेष्वेव, दुर्वर्णस्य रजतस्य, योगः, न तु कामिनीकान्तिषु कुत्सितवर्णयोगः, ("दुर्वर्णं रजतं रूप्यम्" इत्यमरः)। रागेष्वेव गान्धारस्य स्वरस्य, विच्छेदः, न तु पौरवनितासु गान्धारं सिन्दूरं, तस्य छेदः, एतेन न काऽप्येतद्राज्ये विधवेति ध्वनितम्; ("निषादर्षभगान्धार—" इत्यमरः। "गान्धारं रक्तचूर्णं च सिन्दूरं रक्तवालुकम्" इति हारावली)। नीचसेवकेष्वेव

मलिनाम्बरत्वं निशासु न जनेषु, चलरागता गीतेषु न विदग्धेषु, वृषहानिर्निधुवनलीलासु न पौरेषु, भङ्गुरत्वं रागविकृतिषु न चित्तेषु, अनङ्गता कामदेवे न परिजने, मारागमो यौवनोदयेषु न प्रकृतिषु, द्विजाघातः सुरतेषु न प्रजासु, रसनाबन्धो रतिकलहेषु न दानानुमतिषु, अधररागिता तरुणीषु न परिजनेषु, कर्त्तनमलकेषु न पुरन्ध्रीषु, निस्त्रिंशत्वमसीनां न पुरुषाणां, करवालनाशो योधानां परं व्यवस्थितः।

यस्य च महिषी दिग्गजकपोलमदलेखेवानन्दितालिगणा,

---

खर्मस्य परम्परागुड्डेः, अभावः, न तु परिजनेषु खर्मस्य वस्त्रभेदस्य पौरुषस्य वा, अभावः, ("खर्मः परम्परागुड्डौ वस्त्रभेदेऽपि पौरुषे" इति धरणिः)। निशास्विव मलिनाम्बरत्वं, न जनेषु, अम्बरं वस्त्रमाकाशञ्च। गीतेष्विव गानेष्विव, चलरागता, न विदग्धेषु, रागो मालवादिरनुरागश्च। निधुवनलीलास्विव वृषस्य शुक्रस्य, हानिः, न पौरेषु वृषस्य धर्मस्य, हानिः, ("ज्येष्ठाऽम्बुधर्मशुक्रेषु स्मृतोऽसौ वृषभे वृषः" इत्युत्पलिनी)। रागविकृतिष्विव भङ्गुरत्वं, न चित्तेषु भङ्गुरत्वं कुटिलत्वम्। कामदेवे एवानङ्गता अशरीरत्वं, न परिजनेऽनङ्गता असम्बन्धिता। यौवनोदयेषु एव मारस्य कामस्य, उदयः, न प्रकृतिषु मारस्य मारकस्य, उदयः, [मृङ् प्राणत्यागे। भावे घञ्]। सुरतेष्विव द्विजैर्दन्तैः, आघातः, न तु प्रजासु राज्याङ्गेषु प्रजासु, द्विजानां ब्राह्मणानां पक्षिणां वा, घातः। रतिकलहेष्विव रसनायाः काञ्च्याः, बन्धः, न दानानुमतिषु रसनाया जिह्वायाः, बन्धो जड़ता, ("स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा"। "रसज्ञा रसना जिह्वा" इत्युभयत्राप्यमरः)। तरुणीष्विवाधरस्याधरोष्ठस्य, रागिता, न परिजनेष्वधरे नीचे, अनुरागिता। अलकेष्विव कर्त्तनं छेदनं, न पुरन्ध्रीषु स्त्रीषु, सूत्रोत्पादनं, ("दाराः स्यात्तु कुटुम्बिनी। पुरन्ध्री" इत्यमरः। "कर्त्तनं च द्वयोश्छेदे नारीणां सूत्रनिर्मितौ" इति विश्वः)। असीनामिव खड्गानामेव, निस्त्रिंशत्वं निर्गतास्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशास्तत्त्वं, ["सङ्ख्यायास्तत्पुरुषस्य वाच्यः" इति डच्] न पुरुषाणां निस्त्रिंशत्वं क्रूरत्वं निष्कृपत्वं वा, ("निष्करुणेऽथ निस्त्रिंशः क्रूरे खड्गेऽपि चच्यते" इत्युत्तरतन्त्रम्)। योधानामेव परं केवलं, करवालेन खड्गेन, नाशो व्यवस्थितः, नान्यकृतस्य राजभागस्य करस्य वा, बालानां शिशूनां केशानां वा, नाशः।

पार्वतीव सुकुमारा, सर्वान्तःपुरप्रधानभूताऽनङ्गवती नाम। तयोश्च मध्यमोपान्ते वयसि वर्त्तमानयोः कथमपि देवबलात् त्रिभुवनविलोभनीयाकृतिः, पुलोमतनयेवानन्दितसहस्राक्षा, तनया वासवदत्ता नाम बभूव। अथ सा रावणभुजेवोन्नमित-गोत्रा, परिणाममुपयात्यपि यौवनभरे परिणयपराङ्मुखी तस्थौ।

एकदा तु विजृम्भमाणसहकारकोरकनिकुरम्बान्तरान्तर-मधुकरमालासङ्कुलझङ्कारजनितपथिकजनसंज्वरः, कोमल-मलय-मारुतोद्धूत-चूतप्रसवरसास्वाद-कषायकण्ठ कलकण्ठकुहू-रुतभरितसकलदिङ्मुखः, विकचकमलखण्डलीयमानमत्तकल-हंसकुलकोलाहलमुखरितसकलसरोवरः, परभृतनखकोटि-पाटितपाटलिकुड्मल-वृन्तविवरविनिर्गतमधुधारासारशीकर-निकरसमालब्ध-दक्षिण-समीरणव्याकुलागतपथिकजनव्यग्रहृदयः,

यस्य शृङ्गारशेखरस्य, महिष्यनङ्गवती नामेति प्राक्तनेनान्वयः। दिग्गज-कपोलमदजलविद्यानन्दितोऽलीनां, पक्षे—आलीनां सखीनां, गणो यया सा, पार्वतीव शोभनः कुमारः कार्त्तिकेयो यस्याः, पक्षे—सुकुमारा अतिमृदुला, सर्वान्तः-पुरेषु प्रधानभूता, ("प्रधानं क्लीबमेव स्यात् प्रधानकृत्यपि पुमान्" इति मेदिनी)। तयोरनङ्गवतीशृङ्गारशेखरयोः। कथमपि यत्नेन यत्नस्यापि स्वल्पासम्भवादाह, देवबलात्, त्रिभुवने विलोभनीयाकृतिरभिलषणीयाकृतिः, अत एव पुलोमतनयेव शचीव, आनन्दितः सहस्राक्ष इन्द्रो यया सा, पक्षे—आनन्दितं सहस्राणां नेत्रं यया सा, वासवदत्ता नाम तनया बभूव। अथ सा वासवदत्ता, रावणभुजैरोन्नमितो गोत्रः पर्वतः, पक्षे—गोत्रं कुलं यया सा। ("दोर्दोषा च भुजा भुजः" इति मेदिनी)। परिणाममुपयात्यपि यौवनभरे परिणयपराङ्मुखी तस्थौ।

एकदा वसन्तकाल आजगामेत्यन्वयः। विजृम्भमाण इति।—झङ्कारः शब्द-विशेषः। कोमलेति—कषायः सुरभिः, कण्ठः स्वरो यस्य, ("द्रवेऽङ्गरागे सुरभौ रसे वर्णे कषायः" इति विश्वः। "सुरभिः स्यान्मनोज्ञेऽपि" इति रत्नकोषः। "कण्ठो गले सन्निधाने ध्वनौ मदनपादपे" इति विश्वप्रकाशः) कलकण्ठः कोकिलः, ("ताम्राक्षः कोकिलः पिकः कलकण्ठः काकपुष्टः" इति हेमः) कुहूरुतं भरितं पूरितम्। विकचेति। परभृतेति।—कोटिरग्रम्। शीकरा बिन्दवः, ("शीकरोऽम्बु-

मधुमदमुदितकामिनीगण्डूषसीधुसेकपुलकितबकुलः, मदनरस-परवशविलासिनीतुलाकोटिविकट-चटुलचरणारविन्दमन्दप्रहार-प्रहृष्ट-कङ्केलिशतः, प्रतिदिशमश्लीलप्रायगीयमानगीतश्रवणोत्सुक-विङ्गजन-प्रारब्धचर्चरीगीताकर्णनमुह्यमानानेकपथिकशतः, दुर्जन इव सतामरसः, दुष्कुल इव जातिहीनः, रावण इवापीत-लोहितपलाशशतसेवितः, महाशृङ्गारीव सुगन्धवहः, सुराजेव समृद्धकुवलयः, वास्तविक इव विवर्द्धितसुखाशः, सत्कविकाव्य-बन्ध इवाबद्धतुहिनः, सत्पुरुष इव दोषानुबन्धरहितः, कैवर्त्त

---

कथाः स्मृताः" इत्यमरः) समालम्भो मिलितः। श्लिष्टं सर्वम्। मधुमदेति—नवाङ्कुरोद्गमेन सपुलक इवाचरित इति भावः, तथा चोक्तं—"पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः" इति। तुलाकोटिर्मञ्जीरं, तेन विकटं विरहिणां चटुलं चपलं, यच्चरणारविन्दम्। प्रतिदिशमिति [वीप्सायामव्ययीभावः। शरदादित्वाट्टच्] अश्लीलप्रायं ग्राम्यप्रायम्। चर्चरी "चाचर" इति भाषायां प्रसिद्धम्। दुर्जन इव सतां साधूनाम्, अरमोऽप्रीतिजनकः; पक्षे—तामरसेन कमलेन सहितः सतामरसः, ("पङ्केरुहं तामरसम्" इत्यमरः)। दुष्कुल इव जातिः सामान्यं, तेन हीनः, ("जातिर्जातं च सामान्यम्" इत्यमरः) पक्षे—जातिर्मालती, ("सुमना मालती जातिः" इत्यमरः)। रावण इवापीतं लोहितं रुधिरं येषां तादृशैः, पलाशशतैः रक्षसां शतैः, सेवितः, ("रुधिरेऽसृग्लोहितास्र-रक्तक्षतजशोणितम्" इत्यमरः। "हरिद्वर्णो राक्षसश्च पलाशश्छदनः स्मृतः" इति हैमः) पक्षे—आपीतैरीषत्पीतवर्णैः, लोहितैः रक्तैः, पलाशशतैः पलाशवृक्षशतैः, सेवितः, ("रोहितो लोहितो रक्तः" इत्यमरः)। शृङ्गारीव सुगन्धं सुगन्धद्रव्यं, वहति तादृशः; पक्षे—शोभनो गन्धवहो वायुर्यस्मिन् सः, ("पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः" इत्यमरः)। सुराजेव ["न पूजनात्" इति निषेधान्न टच्] समृद्धः कुवलयो भूवलयो यस्मात्; पक्षे—समृद्धानि कुवलयानि यस्मिन्। वास्तविक इव तात्त्विकपदार्थ इव, विवर्द्धिता सुखस्याशा येन तादृशः; पक्षे—वि शरदपेक्षया विशेषेण, वर्द्धितः सुखाशो राजतिमिषः, केचित्तु वास्तविको वाटिकापाल इत्याहुः, ("सुखाशो राजतिमिषः शोभनाशाप्रचेतसोः" इति विश्वः)। सत्कविकाव्यबन्ध इवाबद्धान्यप्रयुक्तानि, तु हि अव्ययानि यत्र तादृशः; पक्षे—तुहिनं हिमम्।

इवाबद्धराजीवोत्पलशालः, समृद्धकासारशकुनिसार्थ इव निन्दितमरुवकः, शक्र इवेन्द्राणीरुचिः, महावीर इवाधरीकृतदमनकः, षिङ्ग इवाम्लानसुभगः वसन्तकाल आजगाम।

अतिदूरप्ररूढेन मधुना जगति को वा न विक्रियते? यदतिमुक्तको मुनिरपि विचकास। कुसुमशरस्य नवचूतप्रसवशरः मूलनिलीना मधुकराली यन्त्रणेव रेजे। वृन्तविनिर्गत-

---

उलूक इव दोषस्यानुबन्धेन रहितः; पक्षे—दोषा रात्रिः, तदनुबन्धेन रहितः, रात्रिह्रासारम्भकत्वात् तदपचयातिशयेति भावः। "मीने मेषे वसन्तः स्यात्"। मीनराशिस्थसूर्यस्य नवांशोत्तरं दिनमानं—३०।३। रात्रिमानं—२९।५७ इति प्रसिद्धं ज्योतिषे। केवलं इव दाम इव, आबद्धाः राजीवोत्पलशालाः मत्स्यभेदा येन सः, ("राजीवाख्यो मृगे मत्स्ये पद्मे राजोपजीविनि" इति विश्वप्रकाशः। "कैवर्ते दाशधीवरौ।" "रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः" इति द्वयोरप्यमरः) पक्षे—राजीवं पद्मम्, उत्पलं कुवलयं, शाखा शाखाः, ("स्यादुत्पलं कुवलयम्" इत्यमरः। "शालः पादपमात्रे स्यात् प्राकारे शकुकद्रुमे" इति विश्वप्रकाशः)। समृद्धकासारस्तत्सम्बन्धी शकुनिसार्थः पक्षिसमूहः, ("कासारः सरसी सरः"। "शकुन्तिपक्षिशकुनि"। "समीरणो मरुवकः" इति विश्वप्यमरः) "मरुआ" इति लोके, यदा—मरुवकः पिण्डीतकः, "मैनफल" इति लोके, ("पिण्डीतको मरुवकः श्वसनः करहाटकः" इत्यमरः) पक्षे—मरुवको मदद्गन्धो यक्षः। शक्र इवेन्द्राणी शची, तस्यां रुचिरभिलाषो यस्य तादृशः; पक्षे—इन्द्राणी निर्गुण्डी, "मेउडी" इति ख्याता लोके, ("सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः)। वसन्तप्रकरणे एव दमनकस्यैव वर्णनान्महावीर इवेति क्वचित् पाठः। षिङ्ग इव विट इव, अम्लानसुभगः; पक्षे—अम्लानैर्महासहाभिः, "कठसरैया" इति ख्याता, सुभगः, ("अम्लानस्तु महासहा" इत्यमरः)।

अतिदूरप्ररूढेन मधुना वसन्तेन मद्येन वा, जगति को न विक्रियते? [कर्मणि लट्]। अतिमुक्तको मुनिरपीति स्पष्टम्; पक्षे—अतिमुक्तकः पुण्ड्रकः, मुनिवनस्थः, विचकास। उत्प्रेक्षया आह, कुसुमशरस्येति।—("शराणां पत्ररचनां यन्त्रणा परिकीर्तिता" इति हारावली। "यन्त्रणं स्यान्नियमने बन्धने रक्षणेऽपि च" इति विश्वप्रकाशः) शेषं स्पष्टम्। वृन्तेति।—वृन्तात् प्रसवबन्धनात्,

विचकिलकलिकातले मञ्जु गुञ्जन् मधुकरो मकरकेतोस्त्रिभुवनविजयप्रयाणशङ्खध्वनिमिव चकार। नवयावकपङ्कपल्लवितसनूपुरतरुणीचरणप्रहारानुरागवशान्नवकिसलयच्छलेन तमिव रागमुद्वहदशोकः। मधुरमधुपरिपूरितकामिनीमुखकमलगण्डूषसेकादिव तद्रसमात्मकुसुमेषु बिभ्रद्बकुलतरू रराज। अन्तराऽन्तरा निपतितमधुकरनिकरकिर्मीरितः कङ्केलिगुच्छोऽर्द्धनिर्वाणमनोभवचिताचक्रानुकारी पथिकजनहृदयदाहमुवाह। विकचविचकिलराजिरलिकुलशबलेन्द्रनीलमणिमयी मुक्तावलीव मधुश्रियो रुरुचे। विरहिणां हृदयमथनाय कुसुमशरस्य चक्रमिव नागकेसरकुसुममशोभत। पथिकजनहृदयमत्स्यं ग्रहीतुं मकरकेतोः पलाव इव पाटलिपुष्पमदृश्यत। कन्दर्पकेलिसम्पल्लम्पट-लाटीललाटतट-धम्मिल्लमल्लमिलितपरिमलसमृद्धमधुरिमगुणः, कामकलाकलापकुशलचारुकर्णाट-

विनिर्गतानां विचकिलानां मल्लिभेदानां, कलिकास्तासां तले मञ्जु गुञ्जन् मधुकरो मधुव्रतः, मकरकेतोस्त्रिभुवनविजयप्रयाणशङ्खध्वनिमिव चकार ("स्मृतौ विचकिलौ मल्ली-प्रभेदे मदनेऽपि च" इति विश्वप्रकाशः)। अशोको नवयावकपङ्केन नवलाक्षारसेन, पल्लवितं रक्तं, सनूपुरं समञ्जीरं, तरुणीचरणं तस्य प्रहारस्तदनुरागवशान्नवकिसलयच्छलेन तं रागमिवोदवहत्, ("भवेत् पल्लवितं लाक्षा-रक्ते सप्रसवे तते" इति विश्वप्रकाशः) बकुलतरुर्मधुना मद्येन, परिपूरितं यत् कामिनीमुखकमलं तस्य गण्डूषसेकात् तद्रसमात्मकुसुमेषु बिभ्रदिव रराज, [वह रराजेत्यत्र "रो रि" इति लोपे "ढ्रलोपः" इति दीर्घः]। अन्तरा निपतितो मधुकरैः किर्मीरितः शबलः, कङ्केलिगुच्छोऽशोकगुच्छः, अर्द्धनिर्वाणमर्द्धविश्रान्तं, यन्मनोभवचिताचक्रं तदनुकारी विरहिणां हृदयदाहं मनस्तापम्, उवाह [वह प्रापणे] ("निर्वाणमस्तङ्गमनम्" इति विश्वः)। अलिकुलशबला विकचविचकिलराजिर्मधुश्रिय इन्द्रनीलमणिमयी मुक्तावलीव रुरुचे। विरहिणामिति स्पष्टम्। पथिकजनहृदयमत्स्यं ग्रहीतुं कुसुमकेतोः पलाव इव पलेन मांसेन, अवति मत्स्यानां वृद्धिं जनयति इति वा पलावो बडिशं, तद्वत् पाटलिपुष्पमदृश्यत, ददृशे इति शेषः, ("पाटलिः पाटला

सुन्दरीस्तनकलशघुसृणधूलिपरिमलामोदवाही, करणरसिक-कान्त-कुन्तलीकुन्तलोल्लासनसङ्क्रान्त-परिमल-मिलितालिमाला-मधुरतरझङ्काररवमुखरितनभस्तलः, नवयौवनरागतरलकेरली-कपोलपालिपत्रावली-परिचयचतुरः, चतुःषष्टिकलाकलाप-विदग्धमुग्धमालव-नितम्बिनी-नितम्बबिम्ब-संवाहनकुशलः, सुरत-श्रमपरवशान्ध्रीनीरन्ध्र-पीनपयोधर-भारनिदाघ-जलकणनिकर-शिशिरितः मलयानिलो ववौ।

अत्रान्तरे वासवदत्तासखीजनाद्विदिताभिप्रायः शृङ्गार-शेखरः स्वसुतायाः स्वयंवरार्थमशेषधरणीतलभाजां राज्ञा-मेकत्र सङ्गममकरोत्। ततो दग्धकृष्णागुरुपरिमलामोद-

---

मोघा" इत्यमरः) "पाडला" इति लोके [illegible] [illegible] [illegible] तलहट्टाङ्गनाभिः सह सम्भोगकलप्रासेनाद। मलयानिलो [illegible] कन्दर्पकेलिसम्पत् कामक्रीडासम्पत्तिः, तस्यां लम्पटाः सक्ताः, [illegible] लाटदेशस्त्रियः, तासां ललाटतटः, धम्मिल्लः संयताः केशाः, तयोः संलग्नेन मिलितः परिमलो मन-मनोहरो गन्धः, तेन समुद्रमधुरिमगुणः, ("धम्मिल्लः संयताः कचाः" इत्यमरः)। कामकलाकलापे कुशलाः प्रवीणाः, याः कर्णाटसुन्दर्यः कर्णाटदेशाङ्गनाः, तासां स्तन-कलशेषु घुसृणं तद्धूलिपरिमलस्तदामोदोऽतिनिर्हारी गन्धः, तद्वाही; स्तनस्पर्शो ध्वनित; ("कुङ्कुमं पीतकाश्मीरं घुसृणं कुसुमात्मकम्" इति शाब्दिकः। "आमोदः सोऽतिनिर्हारी" इत्यमरः)। करणेषु गीताङ्गहारसंवेशक्रियादिषु, रसिका कान्ताः कुन्तल्यः कुन्तलदेशाङ्गनाः, तासां कुन्तलानां केशानाम्, उल्लासनेन सङ्क्रान्तपरिमलत्वेन मिलितालिमाला भ्रमरपङ्क्तयः, तासां मधुरतरझङ्कारे रवैर्मुख-रितनभस्तलः; अनेन कचग्रहणं मर्दितं च ध्वनितम्; ("करणं साधने क्षेत्रे कायकायस्थकर्मसु। गीताङ्गहारसंवेशक्रियासिन्द्रियेषु च॥ बालवादौ च करणः स्मृतः शूद्राविशोः सुते॥" इति विश्वप्रकाशः)। नवयौवनरागतरलकेर-लीनां कपोलपालिपत्रावलीपरिचये सम्बन्धे चतुरः; अत्र परिचयेन निर्माणमपि ध्वनितम्। नितम्बसंवाहनं तत्स्पर्शोऽपि स्पष्टम्।

अत्रान्तरे वासवदत्तायाः सखीजनाद्विदिताभिप्रायः शृङ्गारशेखरः स्वसुतायाः वासवदत्तायाः, स्वयंवरार्थं समस्तनृपतीनां सङ्गममकरोत्। ततो भूभुजां सुम्भित-

मोहितमधुव्रतव्रातबहलगुमगुमायितमुखरितम्, अतिरभसहासच्छटादीधितिधवलिमपरिमिलितम्, अनेकपरिहासकथाकलापविदग्धशृङ्गारिजनसमाकुलं, दह्यमानसुगन्धिसौरभाकृष्ट-पुरोपवनषट्पदकुलसमाकुलम्, अर्जुनसमरमिव नन्दिघोषमुखरितदिगन्तरं मञ्चमारुरोह वासवदत्ता।

तत्र च केचित् कलाङ्कुरा इव विजितनगरमण्डनाः, अपरे पाण्डवा इव दिव्यचक्षुःकृष्णागुरुपरिमिलिताः, अन्ये

---

गोत्तरं, वासवदत्ता मञ्चमारुरोहेत्यन्वयः। दग्धः कृष्णागुरुः कालागुरुः, तदामोदमोहितमधुव्रतव्रातानां बहलगुमगुमायितेन प्रचुराव्यक्तशब्देन, मुखरितम्। अतिरभसेति। चेटीनामित्यादिरस्य। अनेकेषां भूपतीनां परिहासः कुलवयोरूपगुणहीनत्वेन परिहासः, कथाकलापः शौर्यादीनां वंशादिवर्णनसमुदायः, तत्र विदग्धश्चतुरस्तज्ज्ञः, यः शृङ्गारिजनो लोकः, नायिकानायकरसभावाभिज्ञः सखीरूपः, तेन समाकुलं व्याप्तं, ("जनो लोके महर्लोकात् परलोके च पामरे" इति विश्वप्रकाशः) "कपोलादिस्फुरल्लोभो भिन्नोष्ठः स महात्मनाम्। विदोषांशस्य मध्यानामधमानां सशब्दकः ॥ हासः" इति वाग्भटालङ्कारः। तथा च कालिदासः,—"ततो नृपाणां श्रुतवृत्तवंशा" इति; यद्वा—अनेकपरिहासकथाकलापे द्वयोः परस्परानुरागानन्तरमनेकपरिहासकथाकलापे, विदग्ध.। शेषं पूर्ववत्। तथा च कालिदासः,—"तथागतायां परिहासपूर्वं सख्यां सखी वेत्रधरा बभाषे। आर्ये! व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥" इति। दह्यमानेति पूर्वविशेषणेन गतार्थम्। अर्जुनसमरमिव नन्दिघोषेण तदभिधानेन रथेन, मुखरितदिगन्तरम्; तदुक्तं—"गाण्डीवं धनुरेतस्य हनूमान् ध्वजभूषणम्। नन्दिघोषो रथश्चास्य गतिस्तस्य न भूतले ॥" इति; पक्षे—नन्दिरानन्दः, घोषस्तूर्यादिशब्दः, तेन मुखरितदिगन्तरं, ("नन्दिरानन्दने प्रोक्तः प्रतीहारे हरस्य च" इति विश्वप्रकाशः) यद्वा—नन्दिनामा हरानुचर इत्यर्थः, तेषां घोषेणेति पूर्ववत्, ("नन्दिरानन्दनामा च निवयोरपि चेष्यते" इत्युत्तरतन्त्रम्)।

तत्र तेषु, केचित् कलाङ्कुरा इव मूलदेवा इव, विजितनगरमण्डना विजिततदभिमानवेश्याः, कलाङ्कुरेण कामशास्त्रकलाऽभिज्ञतया नगरमण्डना वेश्या जितेति वार्त्ता; ("कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः" इति हारावली) विजितं नगरस्य

शरद्दिवसा इव सुदूरप्रवृद्धसुखाशाः, इतरे व्याहन्तुमुद्यता इव खलार्थिनः, केचिदाखेटका इव रूपानुसारप्रवृत्ताः, केचिज्जैमिनिमतानुसारिण इव तथागतमतध्वंसिनः, केचित् खञ्जना इव सांवत्सरफलदर्शिनः, केचित् सुमेरुपरिसरा इव कात्तस्वरमयाः, केचित विकच-

मण्डनं भूषणं येषां, सर्वोत्कृष्टभूषणधारणादिति भावः; पक्षे—विना गरुडेन, जितं नगरं बाणपुरं, तस्य मण्डनाः, बाणासुरतुल्याः, राक्षसा इत्युपहासोऽयं। अपरे पाण्डवा इव दिव्यचक्षुः कृष्णः, कृष्णा द्रौपदी, गुरवो द्रोणादयो द्रौपदीगुरवो वा, तैर्मिलिताः; पक्षे—दिव्यचक्षुषः सुलोचनाश्च, ते कृष्णागुरुपरिमिलिताश्च कालागुरुधूपधूपायितसर्वाङ्गाश्च; पक्षे—दिव्यचक्षुषोऽन्धाः, कृष्णाः श्यामवर्णाः, अगुरुपरिमिलिता गुरुरक्षणरहिता इत्युपहासः। ("दिव्यचक्षुः सुनयने कृष्णेऽन्धे सिंहकेऽपि च" इति धरणिः। "विट्: परिमलं गन्धे रक्षणेऽपि च" इति विश्वः।) अन्ये शरद्दिवसा इव सुदूरं प्रवृद्धाः सुखाशा राजातिमिषा येषां ते, सुखागामं वसन्ते वृद्धेरिति भावः; पक्षे—सुदूरं प्रवृद्धा सुखस्य वासवदत्तारतिसंभोगस्य, आशा येषां ते; पक्षे—सुदूरं प्रवृद्धा सुष्ठु खमिवाकाशमिव, आशा येषां ते, ईप्सितालब्धेर्व्यर्थत्वादिति भाव इत्युपहासः। अपरे व्याहन्तुं परान् हन्तुम्, उद्यता इव खलार्थिनः खड्गान्यार्थिनः; पक्षे—सुष्ठु शोभना, अबला वासवदत्ता, तदर्थिनः; खजे बलं पराक्रमम्, अर्थयन्ते वैद्यादिभ्यस्ते इत्युपहासः। केचिदाखेटो मृगया, तदासक्ता रूपस्यानुसरणे प्रवृत्ताः। केचिज्जैमिनिमतानुसारिणो मीमांसाऽनुसारिणः, ते इव तथागतानां नास्तिकानां, मतध्वंसिनः; ("सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः" इत्यमरः।) पक्षे—तथाऽऽगतानां यथा स्वगेहे स्थितास्तथाऽऽगतानां, न तु सभोचितवस्त्रभूषणधारिणां सौन्दर्याभिमानजुषां, मतं "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" इत्येवंरूपं, तद्ध्वंसिनस्तन्निन्दकाः; पक्षे—तथाऽऽगतं कुलपरम्परोचितं, मतं शैवादिमतं, तद्ध्वंसिनो नास्तिकाः, आचारहीनताऽवोपहासबीजम्; तथा च श्रीहर्षः,—"जनः किलाचारमुचं विगायति" इति। केचित् खञ्जना इव सांवत्सरो ज्योतिषिकः, तद्वत् फलदर्शिनः, यथा ज्योतिषिको निध्यादिप्रश्ने निधिरूपफलं दर्शयति, एवं खञ्जना अपि सुरतादिना निध्यादिफलं दर्शयन्तीत्यर्थः; पक्षे—सांवत्सरं फलं वर्षफलं, दर्शयन्ति स्त्रीपुत्रादिलाभार्थं तादृशास्ते, ("सांवत्सरो ज्योतिषिकः" इत्यमरः) "दीपादप्यमादपि मध्यादपि नवनिधिर्दर्शोऽप्यन्तात्)

कुमुदाकरा इव भास्वद्दर्शननिमीलिताः, केचिद्धार्त्तराष्ट्रा इव विश्वरूपावलोकनजनितेन्द्रजालप्रत्ययाः, केचिदात्मनि वारणबुद्धा बलवन्तोऽपि सुबाहाः, केचित् पाणिग्रहणार्थिनोऽप्यसुकरं मन्यमानाः, केचिदधरीभूता अपि स्थिराः, केचित्

---

आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥" इति निश्चयरहितत्वेनाधीरत्वं व्यङ्ग्यमुपहासबीजम्। केचित् सुमेरुपरिसरा इव प्राप्तभ्रमय इव, कार्त्तस्वरं सुवर्णं, तन्मयाः; पक्षे—कार्त्तस्वरमयाः सुवर्णमयाः; पक्षे—का ईषत्, आर्त्तस्वरमया वा, ("रुक्मं कार्त्तस्वरं जाम्बूनदम्" इत्यमरः) दृग्धतोपहासबीजम्। केचिद्विकचकुमुदाकरा इव भास्वद्दर्शनेन सूर्यदर्शनेन, निमीलिताः सङ्कुचिताः, कुमुदानां सङ्कोचस्तदाश्रये मत्वाः क्रोशन्तीतिवदुपचारात्, ("भास्वद्विवस्वत्सप्ताश्व—" इत्यमरः) पक्षे—भास्वतोऽतितेजोयुतस्य जनस्य, दर्शनेन निमीलिता निमीलितनयनाः, वासवदत्तादर्शनादेव येषामयं प्रकारस्तेषामये का गतिरिति स्पष्ट एवोपहासः। केचित् धार्त्तराष्ट्रा इव विश्वरूपस्य कृष्णदर्शितविश्वरूपस्य, दर्शनेन जनितेन्द्रजालप्रत्ययाः, अनेन मायाजालमेव कृतमिति धार्त्तराष्ट्राभिप्रायः; पक्षे—विश्वस्य जगतः, रूपं सौन्दर्यं यस्यां सा त्रैलोक्यसमवायिसौन्दर्यपरमाणुनिर्मिता वासवदत्ता, तस्या दर्शनेन जनितेन्द्रजालप्रत्ययाः, तथा च कन्दर्पकेतुवर्णनप्रस्तावे मूलकार एव स्वस्यैव नैपुण्यस्य सौन्दर्यंत्यादि स्पष्टमेव वक्ष्यति, अतो द्वयोरभूतपूर्वं सुरूपयोः संयोजनम्, अत एव स्वप्नदर्शनोत्तरं कन्दर्पकेतौ साभिलाषा कथेत्यादिनाऽननुरूपभर्तृसङ्कुला अन्या निन्दयिष्यति; अतस्तथात्वमत्र व्यङ्ग्यम्। केचिदात्मनि स्वस्मिन्, वारणबुद्धा गजबुद्धाः, बलवन्तोऽपि सबला अपि, सुबाहाः सुखेन वाहो वहनं येषां तादृशाः, [वह प्रापणे घञ्] यो ह्यतिबलः पुमान् स न सुखान्तरेण सुखोद्वहनीय इति विरोधः; पक्षे—शोभना बाहा भुजा येषां ते, अथवा—बाहा भुजा येषां ते, ("बाहो बाहुतुरङ्गयो." इति शाश्वतः) पक्षे—सुबाहाः शोभनाश्वजातिपुरुषाः, ते वृषजातिपुरुषा इव न यथाकथञ्चिदपि जातिनयनायिकोपयुक्ता इति दिक्; प्रपञ्चस्तु रतिरहस्यादौ द्रष्टव्यः, अमीषोपहासबीजं तत एवावधेयम्। पाणिग्रहणार्थिनो वासवदत्तापाणिग्रहणार्थिनः, असुकरं दुष्करं, मन्यमानाः, स्वेच्छासत्त्वेऽपि स्वयंवराधीनत्वात् तस्य; पक्षे—असुकरमसवः प्राणाः, तत्कारकं प्राणप्रदम्। केचिदधरीभूता अप्यपृथ्वीभूता अपि, स्थिराः पृथिव्य इति विरोधः; ("विश्वम्भरा स्थिरा धरा धरित्री" इत्यमरः) पक्षे—अधरीभूता

अथ तस्यामेव रात्रौ स्वप्ने वालिनमिवाङ्गदोपशोभितं, कुहूकण्ठमिव हारिकण्ठं, कनकमृगमिव रामाकर्षणनिपुणं, जयन्तमिव वचनामृतानन्दितवृद्धश्रवसं, कृष्णमिव कंसहर्षं न कुर्वन्तं, महामेघमिव विलसत्करकम्, आदिकन्दं रूपपादपस्य, आरोहणगिरिं शृङ्गाररसस्य, प्रभवगिरिं सुन्दरकथानदीनां, सुरभिमासं वैदग्ध्यसहकारस्य, आदर्शतलं सौजन्यमुखस्य, आदिबीजं विद्यालतानां, स्वयंवरपतिं कीर्त्तेः, सहाग्रहं लक्ष्मीसरस्वत्योः, आदिगृहं शीलसम्पदां, कोशमिव महासौन्दर्य्यस्य, त्रिभुवनविलोभनीयाकृतिं युवानं ददर्श। स च चिन्तामणि-

---

अथागतेषु राजकुमारेषु विरागोत्तरं, तस्यामेव तद्दिवससम्बन्धिन्यामेव, रात्रौ स्वप्ने निद्रायां, सा युवानं ददर्शेत्यन्वयः। वालिनमिवाङ्गदेन तन्नामकवानरेण; वालिनमित्यादिधर्मराजमाधवकाङ्क्षदित्यन्ते माधुर्य्यं गुणः; पक्षे—अङ्गदेन केयूरेण। कुहूकण्ठमिव कुहू इति कण्ठो ध्वनिरस्य तमिव कोकिलमिव, हारिकण्ठं मनोहरस्वरम्; पक्षे—हारी हारयुक्तो मनोहरो वा, कण्ठो गलो यस्य तम्। कनकमृगमिव रामस्य दाशरथेः, आकर्षणनिपुणम्; मारीचनामा राक्षसः कनकमृगो बभूवेति प्रसिद्धं रामायणे; पक्षे—रामाणां स्त्रीणाम्। जयन्तमिवेन्द्रपुत्रमिव, वचनामृतेनानन्दितो वृद्धश्रवा इन्द्रो येन तम्; ("वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः"। "जयन्तः पाकशासनिः" इति द्वयोरप्यमरः) पक्षे—वचनामृतैरानन्दिते वृद्धानां श्रवसी श्रोत्रे येन तं, ("श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः)। कृष्णमिव कंसस्य हर्षं न कुर्वन्तं, तदन्तकत्वादित्यर्थः; पक्षे—कं जनं, न सहर्षं कुर्वन्तम्? अपि तु सर्वमेव। महामेघमिव विलसत्करकं स्फुरद्वर्षोपलम्; ("वर्षोपलस्तु करका" इत्यमरः) पक्षे—करो हस्त एव करकः [समासान्तः कप् वा]। रूपपादपस्य सौन्दर्य्यतरोः, आदिकन्दम्। शृङ्गाररसस्यारोहणगिरिं प्रादुर्भावाद्रिम्। [रुह बीजप्रादुर्भावे]। सुन्दरकथानदीनां रम्यकथानदीनां, प्रभवगिरिमुत्पत्तिगिरिम्। सुरभिर्वसन्तः, तत्सहितमासमिव वैदग्ध्यसहकारस्य। सौजन्यमेव सुखं तस्यादर्शतलम्। विद्यालतानामादिबीजम्। कीर्त्तेः स्वयंवरपतिम्। लक्ष्मीसरस्वत्योः सहाग्रहम्; तथा च कालिदासः,—"निसर्गभिन्नास्पदमेकसंस्थमस्मिन् द्वयं श्रीश्च सरस्वती च" इति। शीलसम्पदामादिगृहम्। महासौन्दर्य्यस्य कोशमिव।

नाम्नो राज्ञस्तनयः कन्दर्पकेतुर्नाम। सा च स्वप्ने एव नामादिकमश्रौषीत्।

अनन्तरमहो! प्रजापते रूपनिर्माणकौशलमिदं, मन्ये स्वस्यैव नैपुण्यस्य सौन्दर्य्यदर्शनोत्सुकमनसा कमलभुवा जगत्त्रयसमवायिरूपपरमाणूनादाय विरचितोऽयम्, अन्यथा कथमिवास्य कान्तिविशेष ईदृशो भवति? वृथैव दमयन्ती नलस्य कृते वनवासवैशसमवाप। मुधैवेन्दुमती महिष्यप्यजानुरागिणी बभूव। अफलमेव दुष्मन्तस्य कृते शकुन्तला दुर्वाससः शाप-

त्रिभुवने त्रिभुवनस्य वा विलोभनीया विलोभनकर्त्री, आकृतिर्यस्य तम्। [ कर्त्तर्य-नीयर् ]। म इति स्पष्टम्।

अनन्तरं आपदवस्थायाम्, इति बहुविधं भावमाना सखीजनेन समं समुत्कण्ठ्य-न्वयः। "प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत्। तृतीये तु स्मृतिः प्रोक्ता चतुर्थे गुणकीर्त्तनम्॥ उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते। उन्मादः सप्तमे प्रोक्तो भवेद्व्याधिस्तथाऽष्टमे॥ नवमे जडता प्रोक्ता दशमे मरणं भवेत्॥" इति भरतोदिता दशावस्था वर्णयंश्चतुर्थीं दशां वर्णयति। अहो! प्रजापते रूप-निर्माणकौशलमिदं मन्ये उत्प्रेक्षा। "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिव-शब्दोऽपि तादृशः॥" स्वस्यैव नैपुण्यस्य प्रजानिर्माण-नैपुण्यस्य, सौन्दर्य्यदर्शनोत्सुकमनसा कमलभुवा ब्रह्मणा, जगत्त्रयसमवायिरूपपरमाणू-नादाय निर्मितः। वृथैवेत्यादि। इन्दुमती भोजराजतनया, अजे तदभिधाने राजनि, अनुरागिणी वृथैव बभूव, अजस्येन्दुमत्यपेक्षया हीनरूपत्वादिति भावः, तथा च कालिदासः,—"कुलेन कान्त्या वयसा गुणेन गुणैश्च तैस्तैर्विनयप्रधानैः। त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन॥" इत्यत्रात्मनस्तुल्यमित्यने-नोपमानकल्पनेनास्या अधिकगुणवत्त्वप्रतिपादनात्, अत एव रत्नं काञ्चनेन समा-गच्छत्विति सङ्गच्छते। कन्दर्पकेत्वपेक्षयाऽजादीनां कुरूपत्वमिति तासां तेष्वनु-रागो वृथैवेति तु स्पष्टमेव। माद्व्याः शेरम्याः, अजे छागे, अनुरागो विरोधा-भासः, एतन्मूलकोऽपि परिहासः, यद्यप्यजवरणसमये इन्दुमत्या न महिषीत्वं, तथाऽपि वासवदत्तापरिहासदशायां तत्त्वेन न कोऽप्यनुपपत्तिः। अफलमेव

मनुबभूव। निरर्थकं मदनमञ्जरी नरवाहनदत्तं चकमे। निष्कारणमेवोरुयुगविनिर्जितरम्भा रम्भा नलकूबरमचीकमत। विफलमेव धूमोर्णा स्वयंवरार्थागतानेकदेवगणगन्धर्वसहस्रेषु धर्मराजमाचकाङ्क्षदिति बहुविधं चिन्तयन्ती विरहमुर्मुर-मध्यमधिरूढेव, वाडवाग्निशिखाकवलितेव, कालाग्निरुद्र-पावकग्रस्तेव, पातालगुहाप्रविष्टेव, शून्यकरणग्रामे हृदये

---

दुष्यन्तस्य राज्ञः, ["न लोकाव्यय—" इति निषेधस्तु कारकषष्ठीविषयः] कृते तादर्थ्ये, [अव्ययम्] दुर्वाससः शापं यच्चिन्तासक्तहृदया स जनस्त्वां न स्मरिष्यतीत्येवं रूपम्, अनुबभूव, ("अर्थे कृतेऽव्ययं तावत् तादर्थ्ये वर्तते द्वयम्" इति कोषसारः) स्पष्टं चैतदभिज्ञानशाकुन्तले—"विचिन्तयन्ती यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम्। स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिव॥" इति। मदनमञ्जरी तन्नामिका स्त्री, नरवाहनदत्तं राजविशेषं, निरर्थकमेव चकमे। ऊरुयुगविनिर्जितरम्भा रम्भा स्ववेश्या, निष्कारणमेव नलकूबरं कुबेरसुतम्, अचीकमत, अकामयत; तथा च श्रीहर्षः,—"पश्चात्किल श्रोत्रसुधां विधाय रम्भा चिरं भामतुलां नलस्य। तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं सा॥" उत्तमोपभोगिनो भोगे प्रकृतिनिन्दाहेतुः; तथा च भर्तृहरिः,—"मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः किं जीर्णं तृणमत्ति मान-महतामग्रेसरः केसरी?" [कमेर्लुङि "कमेर्णिङ्" इति स्वार्थे णिङि "णिश्रि" इति चङि "णेरनिटि" इति लोपे "णौ चङि" इत्युपधाह्रस्वे "चङि" इति द्वित्वम्। "सन्वल्लघुनि" इति सन्वद्भावे "सन्यतः" इतीत्वेऽभ्यासस्य "दीर्घो लघोः" इति दीर्घः। अट्] धूमोर्णा स्वयंवरगतानेकदेवगणगन्धर्वसहस्रेषु, ["षष्ठी चानादरे" इति चकारादनादरे सप्तमी] ताननादृत्य धर्मराजं पितृपतिं, विफल-मेवाचकाङ्क्षत् [काक्षि वाक्षि माक्षि काङ्क्षायाम्। लुङ्] इति बहुविधं चिन्तयन्ती। विरहमुर्मुरेत्यादिनाऽष्टमीमवस्थां वर्णयति। विरहतुषानलमधिरूढेव, ("मुर्मुरस्तु तुषानलः" इति वैजयन्ती)। वाडवाग्निर्वाडवानलः, तच्छिखा ज्वाला, तया कवलितेव, ("वाडवो वडवानलः"। "वह्नेर्द्वयोर्ज्वालकीलौ" इत्युभयत्राप्यमरः)। कालाग्निर्यो रुद्रपावकः शिवालिकनेत्रजन्मा, तेन ग्रस्तेव। इति विरहदाहमधि-वस्थान्त्यं वर्णयति। पातालगुहायां प्रविष्टेव। शून्यकरणग्रामे शून्येन्द्रियवर्गे,

लिखितमिव, उत्कीर्णमिव, प्रत्युप्तमिव, कीलितमिव, निगलितमिव, वज्रलेपघटितमिव, अस्थिपञ्जरप्रविष्टमिव, मर्मान्तरस्थितमिव, मज्जासारशबलितमिव, प्राणपरीतमिव, अन्तरात्मानमधिष्ठितमिव, रुधिराश्रयद्रवीभूतमिव, पललसंविभक्तमिव कन्दर्पकेतुं मन्यमाना उन्मत्तेव, बधिरेव, मूकेव, शून्येव, निरस्तकरणग्रामेव, मूर्च्छागृहीतेव, ग्रहग्रस्तेव, यौवनसागरतरङ्गपरम्परापरिगतेव, रागरज्जुभिरपवारितेव, कन्दर्पकुसुमबाणैः कीलितेव, शृङ्गारभावनाविघूर्णितेव, रूपपरिभावनाशल्यखिलितेव, मलयानिलापहृतजीवितेव, प्रियसखि! अनङ्गलेखे! वितर हृदये पाणिपद्मं दुःसहो विरहसन्तापः। मुग्धे! मदनमञ्जरि! सिञ्च चन्दनोदकेन। सरले! वसन्तसेने! संवृणु केशपाशम्। तरले! तरङ्गवति! विकिर केतकीधूलिम्। वामे! मदनमालिनि! वीजय शैवलदलेन। चपले! चित्रलेखे! लिख चित्रे चित्तचौरं जनम्। भाविनि! विलासवति! निक्षिप मुक्ताचूर्णनिकरम्। रागिणि! रागलेखे! स्थगय

---

यद्धृदयं तव लिखितमिव। अन्तरात्मानमधिष्ठितमिवान्तरात्मनि स्थितम्, [ "अधिशीङ्स्थासां कर्म" इति कर्मसंज्ञा ]। पललं मांसं, तत्र विभक्तमिव। सप्तमीमवस्थां दर्शयति, उन्मत्तेव। अष्टमीमवस्थां व्याधिमाह, बधिरेव मूकेव। नवमीमवस्थां जडतामाह, शून्येवेत्यादि। मदनव्याधिनिराकरणार्थं शिशिरोपचारं वर्णयन् पुनरष्टमीमवस्थां सूचयति। प्रियसखि! अनङ्गलेखे! अनङ्गस्य लेखा यस्यां सा ईदृग्भूतमन्मथे! विरहवेदनाऽनभिज्ञतया शिथिलं तदुपचारेषु, हृदये पाणिपद्मं वितर देहि, दुःसहो विरहसन्तापः। मुग्धे! अनभिज्ञे! मदनमञ्जरि! चन्दनोदकेन सिञ्च। सरले! मन्मथविकारानभिज्ञे! वसन्तसेने! केशपाशं केशकलापं, संवृणु, ("पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः)। तरले! चञ्चलचित्ते! तरङ्गवति! केतकीधूलिं केतकीपरागं, विकिर। वामे! विपरीतक्रियाकारिणि! मदनमालिनि! नलिनीदलेन वीजय। चपले! चित्रलेखे! चित्रे चित्तचौरं जनं लिख। भाविनि! भावाभिज्ञे! मुक्ताचूर्णनिकरं

नलिनीदलसमूहेन पयोधरभारम्। कान्ते ! कान्तिमति ! मन्द-मपनय बाष्पबिन्दून्। एहि भगवति ! निद्रे ! अनुगृहाण माम्। धिगिन्द्रियैरपरैः, किमिति लोचनमयान्येव ममाङ्गानि न कृतानि विधिना ? भगवन् ! कुसुमायुध ! अयमञ्जलिस्ते, अनुचरो भव भाववति तादृशे जने। मलयानिल ! सुरतसमुत्कण्ठा-दीक्षागुरो ! वह यथेच्छम्, अपगता मम प्राणा इति बहु-विधं भाषमाणा सखीजनेन समं मुमूर्च्छ।

अनन्तरं परिजनप्रयत्नोच्छ्वसितजीविता सती अपमति-

निचिप। रागिणि ! रागवति ! नलिनीदलसमूहेन पयोधरभारं समयाच्छादय। कान्ते ! कान्तिमति ! मन्दं बाष्पबिन्दूनपनय, बिन्दूनिति बहुवचनं पीडाबहुल-सूचकम् ; तथा च भरतः,—"बाष्पो नानाश्रुचः पूर्वमश्रो सञ्जायते विधा। निमित्त-संवसन्नाद्यानन्देर्ष्यार्तिसम्भवः॥ आनन्दे विलुठन् भवतीर्ष्यायां सतरङ्गितायासः। आर्तावनलाविकलबहलबहुलबिन्दुसन्दर्भः॥" इति। सप्तमीमवस्थामुन्मादं वर्णयति। व्यभिचारी चोन्मादः, अत्र विभावः प्रियवियोगविभवभ्रंशादयः, अनुभावो ह्या-ऽऽलपितरुचारोदनादयः। भगवति ! सर्वैश्वर्ययुते ! प्रसन्नेयं त्वं पुनरिष्टगोचरं करिष्यतीति स्तुतिः, निद्रे ! मामनुगृहाण, पूर्वं तत्सम्पर्कात् यथा सुखमनुभूतमेवं पुनरपि सुखानुभवं यथा करवै तथा रचयेत्यनुग्रह इत्यर्थः। अपरैरिन्द्रियैः किम ? तददर्शनेनानुपयुक्तत्वादुत्प्रेक्षा, [कृत्वेत्यस्य गम्यमानत्वात् तृतीया, गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका] वेधसा लोचनमयान्येव ममाङ्गानि न कृतानीति तं धिक् ; ["उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥" इति सूत्रे तमित्यत्र द्वितीया]। भगवन् ! कुसुमायुध ! अयमञ्जलिर्नमस्कारः, भाववत्यभिप्रायाभिज्ञे, तादृशे जनेऽनुचरो भव तस्य सेवको भवेत्यर्थः, यथा मां पीडयसि तथा तमपि पीडयेति त्वतिवाल्ल्याद्ययोग्यत्वाच्च नाभ्यथायि ; सम्बन्धं विना गुणाविष्कारामावेनास्वरूपत्वेन दीनत्वादनुचरत्वोक्तिः। मलयानिल ! समुत्कण्ठादीक्षागुरो ! यथेच्छं वह, यथेष्टवहनात् सोऽप्युत्कण्ठितो भविष्यतीत्यभिप्रायात् प्रार्थना, [प्रार्थनायां लोट्]। मे प्राणा अपगताः, [वर्त्तमाने क्तः] ("पुंसि भूम्न्यसवः प्राणाः" इत्यमरः)।

शिशिरघनसाररसनिम्नगाकूलपुलिने, क्षणमतितुहिनमलयजरससरित्परिसरे, क्षणमरविन्दकाननपरिवारितसरस्तटविटपिच्छायासु, क्षणमनिलोल्लासितदलेषु कदलीकाननेषु, क्षणं कुसुमशय्यासु, क्षणं नलिनीदलसंस्तरेषु, प्रलयकालोदितद्वादशरविकिरणकलापतीव्रविरहाग्निदह्यमानामतिकृशां विप्राणामिव तनुं बिभ्रती, प्रचलदमन्दमन्दरान्दोलितदुग्धसिन्धुतरलतरङ्गच्छटाधवलहासच्छुरिताधरपल्लवं तन्मुखारविन्दं, द्विजकुलमिव श्रुतिप्रणयि तदीक्षणयुगलं, सहजसुरभिमुखपरिमलमाघ्रातुकामेव सुदूरविनिर्गता सा नासावंशलक्ष्मीः, कलङ्कमुक्तेन्दुकलाकोमला पीयूषफेनपटलपाण्डुरा सा द्विजपङ्क्तिः, तददृष्टचरमनङ्गमतिशयानं रूपं, धन्यानि तानि स्थानानि, ते च जनपदाः, पुण्यानि नामाक्षराणि च तानि सुकृतभाञ्जि यान्यमुना परिष्कृतानीति मुहुर्मुहुः परिभावयन्ती, दिक्षु विदिक्षु लिखितमिव, नभस्युत्कीर्णमिव, विलोचने प्रतिबिम्बितमिव, चित्रफलके लिखित्वा पुरो दर्शितमिवेतस्ततो विलोकयन्ती व्यतिष्ठत ।

---

अनन्तरं परिजनप्रयत्नेनोच्छ्वसितं जीवितं यस्यास्तादृशी सात्यतिशिशिरघनसाररसनिम्नगाकूलपुलिनेष्वतिशीतलकर्पूरजलनदीतीरे पुलिनेषु, क्षणमतितुहिनमलयजरससरित्परिसरेष्वतिशीतचन्दनजलनदीषु, क्षणमरविन्दकाननपरिवारितो यत् सरस्तस्य तटविटपिच्छायासु, क्षणमनिलोल्लासितानि दलानि येषां तादृशेषु कदलीकाननेषु, क्षणं कुसुमशय्यासु, क्षणं नलिनीदलसंस्तरेषु नलिनीदलास्तरेषु, प्रलयकालोदितद्वादशरवीणां किरणकलापवत् तीव्रो यो विरहानलस्तेन दह्यमानात एवातिकृशां विप्राणां तनुमिव बिभ्रती धर्मात् तनुमिति, मुहुर्मुहुः परिभावयन्ती दिक्षु लिखितमिवेत्यादीतस्ततो विलोकयन्ती व्यतिष्ठतेत्यन्वयः। गुणकीर्तनरूपां चतुर्थीं दशां प्रचलदित्यादिना वर्णयति। प्रचलदमन्दो मन्दरस्तेनान्दोलितः कम्पितः, दुग्धसिन्धुस्तस्य तरलतरङ्गच्छटावद्धवलो हासो हास्यं, तेन छुरितमधरपल्लवं यस्य तादृशं तन्मुखारविन्दं कन्दर्पकमुखकमलम्। द्विजकुलमिव ब्राह्मणसमूहमिव

अथ तस्याः सारिका तमालिका नाम तत्सखीभिः सहा-लोच्य कन्दर्पकेतोर्भावमाकलयितुं प्रस्थिताऽऽगता च मयैव सार्द्धमत्रैव तरोरधस्तात् तिष्ठति" इत्युक्त्वा विरराम।

अथ मकरन्दः सहर्षमुत्थाय तमालिकां विदितवृत्तान्ता-मकरोत्; सा च कृतप्रणामा मकरन्दाय पत्रिकामुपानयत्।

अथ स तां स्वयमेवावाचयत्।

"प्रत्यक्षदृष्टभावाऽप्यस्थिरहृदया हि कामिनी भवति।
स्वप्नानुभूतभावा दृढयति न प्रत्ययं युवतिः॥"

---

चित्रमिव वा, स्तुतिर्वेदः कथंच, तव प्रत्यक्षि प्रत्यक्षवत्, तदीयचक्षुर्युगलम्। सदृशेति कालदृष्टेति स्पष्टम्। अनङ्गमतिशयानं तदनिर्वचनीयं, रूपमदृष्टचरम्। [ भूतपूर्वे चरट् ] धन्यानि तानि स्थानानि, ते च जनपदाः, यत्र स वसतीति शेषः। तानि नामाक्षराण्यभिधानवर्णानि, सुकृतभाञ्जि पुण्यानि, यान्यमुना परिष्कृतान्यलङ्कृतानि, इति परिभावयन्ती चिन्तयन्ती, दिक्षु विदिक्षु लिखितमिव, नभस्याकाशे, उत्कीर्णमिव विकीर्णमिव, विलोचने प्रतिबिम्बितमिव, चित्रफलके लिखित्वा पुरो दर्शितमिवेतस्ततो विलोकयन्ती, अननुभूतमपि सङ्कल्पेनावलोक्यते; तदुक्तं—"कामक्रोधभयोन्मादाचौर-स्वप्नाद्युपद्रवात्। असत्यान्यपि पश्यन्ति पुरतोऽवस्थितानिव॥" इति, व्यतिष्ठत, [ "समवप्रविभ्यः स्थः" इति तङ् ]।

पत्रहारिणी दूतीयम्; "कामिन्याः कामिनश्चापि सन्देशार्थां तु पत्रिकाम्। प्रापयत्यचिरेणैतामाहुः पत्रस्य हारिकाम्॥" इति। अथ तस्याः सारिका तमालिका नामेति प्रसिद्धौ, तत्सखीभिः सहालोच्य कन्दर्पकेतोर्भावं वासवदत्ताऽनुरागम्, आकलयितुं प्रस्थिता मयैव सार्द्धं सह, आगता चात्रैव तरोरधस्तात् तिष्ठतीत्युक्त्वा विरराम।

अथ शुकवाक्यश्रवणोत्तरं, मकरन्दः सहर्षमुत्थाय तमालिकां विदितो वृत्तान्तो यस्यास्तादृशीमकरोत्, सा च तमालिकाऽपि, कृतप्रणामा सती मकरन्दाय पत्रिका-मुपानयत्। अथ स मकरन्दः, तां पत्रिकां, मयि सत्येतावन्मात्रमपि प्रयासोऽस्या मा भूदित्यभिप्रायात् स्वयमेवावाचयत्।

प्रार्थनया प्राह। प्रत्यक्षं दृष्टो भावः पुरुषाभिप्रायोऽनया तादृश्यपि कामिनी

तच्छ्रुत्वा कन्दर्पकेतुरमृतार्णवमग्न इव सर्वानन्दानामुपरि वर्त्तमानो मन्दमुत्थाय प्रसारितबाहुयुगलस्तमालिकामालिलिङ्ग। अथ तयैव सार्द्धं किं करोति? किं वदति? कथमास्ते? इत्यादि सकलं वासवदत्तावृत्तान्तं पृच्छंस्तत्र तां निशां दिवसमप्यतिवाह्य कन्दर्पकेतुश्चचाल। अत्रान्तरे भगवानपि मरीचिमाली तं वृत्तान्तमिव कथयितुं मध्यमलोकमवततार।

अथ वासरताम्रचूडचूडाचक्राकारः, चक्रवाकदम्पतिसङ्क्रामितसन्तापतयेव मन्दिमानमुद्वहन्, मन्दारस्तवकसुन्दरः, सिन्दूराहतसुरराजकुञ्जरकुम्भविभ्रमं बिभ्राणः, ताण्डवचण्डवेगोच्छालितधूर्जटिजटाजूटकूटबन्धबन्धुरविकटवासुकिभोगमणिताटङ्कसनाभिमण्डलः, सन्ध्यामन्धिनीमरसयावकपटचारुः, वारुणीवारविलासिन्यरुणमणिकुण्डलकान्तिः, कालकरवालकृत्तवासरमहिषस्कन्धचक्राकारः, मधुपूर्णकपालपात्रमिव कालकपालिनः, अम्लानकुसुमस्तबक इव नभःश्रियः, गगनाशोकतरुस्तबक इव, कनकमयदर्पण इव प्रतीचीविलासिन्याः, भगवान् दिनमणिश्चरमार्णवपर्यास तरलतरङ्गवेगास्फालितविद्रुमविटपाकृतिर्ममज्ज।

---

हि यतः, अस्थिरहृदया मय्यनुरक्त एवासावित्यनिश्चलांचत्ता, भवति, स्वप्नानुभूतभावा युवतिः प्रत्ययं स्वप्नदृष्टं स्वानुरक्तत्वनिश्चयं, न द्रढयति न दृढीकरोतीत्यर्थः, प्रत्यक्षदृष्टे यत्रानिश्चयस्तत्र परोक्षे का वार्त्तेति भावः। काव्यार्थापत्तिरलङ्कारः, "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" इति। आर्य्या छन्दः, "लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः। षष्ठोऽयं न लघू वा प्रथमेऽर्द्धे नियतमार्य्यायाः॥ षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयति पदनियमः। चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥" इति लक्षणात्।

तच्छ्रुत्वेति स्पष्टम्। अथ तयैवेत्यपि स्पष्टम्। अत्रान्तरे भगवान् मरीचिमाल्यपि वृत्तान्तं वासवदत्तावृत्तान्तं, कथयितुमिव मध्यमलोकं भूलोकम्, अवततार।

१। अथ चरमार्णवपर्यासे ममज्जेति सम्बन्धः। वासरमेव ताम्रचूडस्तस्य चूडा-

क्रमेण च रजोविलुठितोत्थितकुलायार्थिपरस्परकलह-विकलकलविङ्ककुलकलकलवाचालशिखरेषु शिखरिषु, वसति-काङ्क्षिषु ध्वाङ्क्षेषु, अनवरतदह्यमानकालागुरुधूपपरिमलोद्गारिषु वासागारेषु, दूर्वाऽञ्चिततटिनीतटनिविष्टविदग्धजनप्रस्तूयमान-

---

चक्राकार:। चक्रशब्दाख्यां चक्रं समूह:, तत्र सञ्जनित: सन्तापो येन तद्भाव:, तथैव मन्दिमानमस्पतेजस्त्वम्, उदयनम्। मन्दारस्तबकसुन्दर:। सिन्दूरेणाप्लुतो-ऽभिमृत:, कर्दित:, य: सुरराजकुम्भिकुम्भस्थलविभ्रमं तदाकारत्वादस्यैकत्वाभ्राततोति विशिष्टभ्रमं विलासं च, बिभ्राण:। [पूर्वकार्येऽन्तर्भावितण्यर्थोऽत्र भृञ्] ("दिपायि-युर्दंसृतिकुम्भिनीमजा:" इति हारावली)। ताण्डवचण्डवेगेनोच्छलितेन धूर्जटि-जटाजूटकूटबन्धेन बन्धुर उन्नतानत:, अत एव विषमविन्यासो यो वासुकिस्तस्य भोगमणि: फणामणि:, स एव ताटङ्क: स्त्रीणां कर्णभूषणं, तत्सनाभिस्तत्तुल्यरूप:, मण्डलो यस्य स: ; वर्तुलत्वार्थे ताटङ्करूपकं, ("बन्धुरं तून्नतानतम्" इत्यमर:)। सन्ध्येव सन्धिन्यकालदुग्धा वृषाक्रान्ता वा गौ:, तस्या: सरसयावकपटलवद्राग:; "पीनाया-यातिदुग्धाया गौ: शृङ्गाराय मानवा:। रञ्जयन्ति शिरोदेशमस्याश्च बहुधा किल॥" क्वचिद्यावकपटलेति पाठ:; अस्मिन् पाठे—यावकपटलशब्देन यावकपटलमिव यावकपटलं लोकप्रसिद्ध-"मेहदी" इति पत्रविशेषं रञ्जनतिलकं विवक्षितम्; ("सन्धिनी तु वृषाक्रान्ताकालदुग्धगवी: स्मृता" इति विश्वप्रकाश:) सन्ध्यापुरन्ध्रीति पाठ: सुगम:। वारुण्येव वारविलासिनी तस्या अरुणमणिकुण्डलवत् कान्तिरस्य स:। कालकर-वालेन कर्तन्छिन्न:, वासरमहिषस्कन्धस्तबकाकार: ("करवाल: कृपाणवत्" इत्यमर:)। कालकपालिनो मधुपूर्णकपालपात्रमिव। नभ:श्रियोऽम्लानकुसुमस्तबक इव, तत्क्रीडनार्थेति भाव:। गगनमैनाशोकतरुस्य स्तबक इव। प्रतोषोविलासिन्या: कनकमयदर्पण इव। दिनमणिर्भगवांश्चरमाचलपयसि ममज्ज।

क्रमेण भगवती सन्ध्या समदृश्यतेत्यन्वय:। पूर्वं रजोविलुठितानि पश्चादुत्थि-तानि कुलायार्थिन्यत एव परस्परकलहविकलानि कलविङ्ककुलानि तेषां कलकलेन वाचालानि शिखराण्यग्राणि येषां तादृशेषु शिखरिषु वृक्षेषु सत्सु; ("कलविङ्क-श्चिरपुत्री गृहनीडो वृषायण:" इति हारावली। "शिरोऽग्रं शिखरं वा ना" इति चतुष्करवेऽमर:)। वसतेर्निवासस्थानस्य, काङ्क्षा येषां तादृशेषु, ध्वाङ्क्षेषु काकेषु।

काव्यकथाश्रवणोत्सुकशिशुजनकलकलनिवारणक्रुद्धेषु वृद्धेषु, आलोलिकातरलरसनाभिः कथितकथाभिर्जरतीभिरतिलघुकरतालजनितसुखे शिशयिषमाणे शिशुजने, विरचितकन्दर्पमुद्रासु क्षुद्रासु, कामुकजनानुबध्यमानदासीजनविविधाश्लीलवचनश्रुतिविरसीकृतसन्ध्यावन्दनोपविष्टेषु शिष्टेषु, रोमन्थमन्थरकुरङ्गकुटुम्बकाध्यास्यमानम्रदिष्ठगौष्ठीनपृष्ठास्वरण्यस्थलीषु, निद्रालुद्रोणकुलकलितकुलायेषु काननानिकायेषु, कापेयविकलकपिकुलेष्वाश्रमतरुषु, निर्जिगमिषति जरत्तरुकोटरकुटीरकुटुम्बिनि कौशिककुले, तिमिरतर्जननिर्गतासु दहनप्रविष्टदिनकरकरशिखास्विव प्रस्फुरन्तीषु दीपलेखासु, मुखरितधनुःष

---

अनवरतेति स्पष्टम्। दूर्वाभिरश्चितं यत् तटिनीतटं तत्र निविष्टविदग्धजनैः प्रस्तूयमानानां काव्यकथानां श्रवणोत्सुकाः, अत एव शिशुजनकलकलनिवारणार्थं क्रुद्धास्तादृशेषु वृद्धेषु। आलोलिकायां बालानां निद्रार्थे क्रियमाणे "ऊरलोल" इति लोकप्रसिद्धे मुखध्वनिविशेषे, तरला रसना जिह्वा यासां ताभिः, कथितकथाभिर्जरतीभिरतिलघुकरतालजनितसुखे शिशयिषमाणे शयितुमिच्छौ, शिशुजने, तदुक्तम्—"आलोलिका मुकुलिका डलुलिर्मुखघण्टिका" इति। विरचिता कन्दर्पमुद्रा प्रसाधनं याभिस्तासु, क्षुद्रासु वेश्यासु, ("क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च" इति विश्वप्रकाशः)। कामुकेति स्पष्टम्। रोमन्थेन चर्वितस्याभ्यवहृतस्य पुनश्चर्वणेन, मन्थरेण कुरङ्गकुटुम्बकेनाध्यास्यमानं म्रदिष्ठं मृदुतरं, गौष्ठीनानां भूतपूर्वगोस्थानानां, पृष्ठं पृष्ठवत् पृष्ठं यासु तादृशीष्वरण्यस्थलीषु सतीषु, ("गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्" इत्यमरः)। निद्रालुद्रोणकुलं काककुलं, तेन कलितकुलायेषु व्याप्तनीडेषु, काननानिकायेषु काननसमूहेषु, ("निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसंहतौ" इति विश्वप्रकाशः)। कापेयं कपिकर्म, तेन विकलानि कपिकुलानि येषु तेष्वाश्रमतरुषु, ["कपिज्ञात्योर्ढक्"]। जरत्तरूणां चिरन्तनवृक्षाणां, कोटरा निष्कुहाः, त एव कुटीराणि तेषु कुटुम्बिनि कुटुम्बवति, कौशिककुले निर्जिगमिषति निर्गन्तुमिच्छति, ("निष्कुहः कोटरं वा ना" इति "वासः कुटी" इति च द्वयोरप्यमरः) ["कुटीशमीशुण्डाभ्यो रः" इत्यल्पत्वे रः]। तिमिरतर्जनार्थे

वर्षति शरनिकरमनवरतमशेषसंसारशेमुषीमुषि मकरध्वजे, सुरतारम्भाकल्पशोभिनि शम्भलीभाषितभाजि भजति भूषां भुजिष्याजने, सैरिन्ध्रीबध्यमानरशनाकलापजल्पाकजघनस्थलीषु जनीषु, विश्रान्तकथाऽनुबन्धतया प्रवर्त्तमानानेकजनगृहगमनत्वरेषु चत्वरेषु, समावासितकुक्कुटेषु निष्कुटेषु, कृतयष्टिसमारोहणेषु बर्हिणेषु, विहितसन्ध्यासमयव्यवस्थेषु गृहस्थेषु, सङ्कोचोदञ्चदवाञ्चत्केसरकोटि--सङ्कट-कुशेशय-कोशकोटर-कुटीरशायिनि षट्चरणचक्रे, अथानेन वर्त्मना भगवता भानुमता समागन्तव्यमिति सर्वपट्टमयैर्वसनैरिव मणिकुट्टिमालिरिव विरचिता वरुणेन, कालकृत्तस्य दिवसमहिषस्य रुधिरधारेव,

---

निर्गतास्विव दहनप्रविष्टदिनकरकराणां किरणानां, शिखासु प्रस्फुरन्तीषु दीपशिखासु, "सौरं तेजः सायमग्निं सङ्क्रमते"। "आदित्यः सायमग्निं प्रविशति" इत्यादिश्रुतिः। मुखरितधनुषि [समासान्तविधेरनित्यत्वान्नानङ्] शरनिकरं वर्षति, अनवरतमशेषसंसारशेमुषीमुषि सकलसंसारमतिहारके, मकरध्वजे, ("धीः प्रज्ञा शेमुषी मतिः" इत्यमरः)। सुरतारम्भाकल्पेन वेशेन, शोभिनि शम्भलीनां कुट्टनीनां, भाषितं वचनं, भजति तादृशि, भूषां भजति भुजिष्याजने प्रेष्याजने, ("आकल्पवेशौ नेपथ्यम्"। "शम्भली कुट्टनी समे"। "नियोज्यकिङ्करप्रैष्य-भुजिष्यपरिचारकाः" इति त्रिष्वप्यमरः। "भुजिष्या प्रेष्यमात्रे स्यात् स्वतन्त्रायामपि स्मृता" इति धरणिः)। सैरिन्ध्रीभिर्बध्यमानरशनाकलापेन काञ्चीकलापेन, जल्पाकजघनस्थलीषु जनीषु वधूषु, ("सैरिन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका"। "स्याज्जल्पाकस्तु वाचालः" इति द्वयोरप्यमरः। "जनी सीमन्तिनीवध्वोरुत्पत्तौ च जनिर्मता" इति विश्वः)। विश्रान्तकथाऽनुबन्धतया प्रवर्त्तमानानेकजनेषु गृहगमनत्वरा येषु तेषु चत्वरेष्वङ्गणेषु, ("अङ्गणं चत्वराजिरे" इत्यमरः)। निष्कुटेषु गृहारामेषु, समावासितकुक्कुटेषु, ("गृहारामास्तु निष्कुटाः" इत्यमरः)। बर्हिणेषु मयूरेषु, कृतयष्टिसमारोहणेषु, ("मयूरो बर्हिणो बर्ही" इत्यमरः)। गृहस्थेषु विहितसन्ध्यासमयव्यवस्थेषु। सङ्कोचेति स्पष्टम्। अथानन्तरं, वक्ष्यमाणेन वर्त्मना भानुमता समागन्तव्यमिति सर्वपट्टमयैर्वसनैर्मणिकुट्टिमालिभिर्मणिबद्धभूमिभिरिव, रचिता, ("कुट्टिमोऽस्त्री

विद्रुमलतेवाम्बरमहार्णवस्य, रक्तकमलिनीव गगनतडागस्य, काञ्चनसेतुरिव कन्दर्पगमनस्य, मञ्जिष्ठारागारुणपताकेव गगनहर्म्यतलस्य, लक्ष्मीरिव स्वयंवरपरिगृहीतपीताम्बरा, भिक्षुकीव तारानुरक्ता रक्ताम्बरधारिणी, भगवती सन्ध्या समदृश्यत।

क्षणेन च क्षणदारागरचनाचतुरासु सन्ध्याशिष्यास्विव वेश्यासु, तुलाधारशून्यायां पण्यवीथ्यामिव दिवि, घनघटमानदलपुटासु पुटकिनीषु, तिमिरप्रतिहस्तकेष्विव तत इतः परिभ्रमत्सु कमलसरःसु मधुकरेषु, विकलकुररीकृतकुलेन रविविरहविधुरासु विलपन्तीष्विव सरोजिनीषु, गणक इव नक्षत्रसूचके प्रदीपे, हरकण्ठकाण्डकालिमसनाभि, दैत्यबल-

निबिडा भूः" इत्यमरः)। काञ्चनसेत्वादि स्पष्टम्। लक्ष्मीरिव स्वयंवरपरिगृहीतः पीताम्बरो विष्णुर्यया; पक्षे—पीताम्बरं पीतनभः। भिक्षुकीव तारायां देवतायाम्, अनुरक्ता, रक्ताम्बरधारिणी रक्तवस्त्रधरा; पक्षे—तारा नक्षत्राण्यनुरक्ता यस्याम्, [आहिताग्न्यादिः] रक्तमम्बरमाकाशो यस्याम्।

क्षणेन गणक इव नक्षत्रसूचके प्रदीपे तिमिरमजृम्भतेत्यन्वयः। क्षणदा रात्रिः, तस्या रागरचना तत्र चतुरासु सन्ध्याशिष्यास्विव वेश्यासु; पक्षे—क्षणदा आ साकल्येन, रागा भैरवादयः, तेषां रचना यथायथं स्वरग्राममूर्च्छनासहितं गानं, तत्र चतुरासु; यद्वा—क्षणदानां स्वसुखप्रदानाम्, आ साकल्येन, रागरचना प्रीतिरचना, तत्र चतुरासु। तुलाधारा वणिजः, तैः शून्यायां पण्यवीथ्यामिव दिवि; पक्षे—तुला राशिराधारो येषां ते चन्द्रादयः, तैः शून्यायाम्; तथा च माघः,—"अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः। विगतीकृतावमतमिस्रमभादपदोषतैव विगुणस्य गुणः॥" इति, ("तुलाधारस्तुलाराशौ भवेद्वाणिजकेऽपि च" इति विश्वः)। घनं निबिडं, घटमानदलपुटासु पुटकिनीषु कमलिनीषु; राजादेर्योग्यस्यापदि विपक्षिणो विपक्षमपसारयन्ति, सयौकाश्च स्वद्वारपिधानमाचरन्तीति लोकव्यवहारो ध्वनितः, "हरताल" इति भाषायां, ("नालीकिनी पुटकिनी बिसिनाब्जिनी पद्मिनी" इत्युत्पलिनी)। कमलसरःसु तिमिरप्रतिहस्तकेष्विवेतस्ततो भ्रमरेषु परिभ्रमत्सु, ("प्रतिहस्तकोऽपरहस्तकः") "गुमास्ता" इति भाषायाम्; [संज्ञायां कन्]

मिव प्रकृष्टतारकं, भारतसमरमिव वर्द्धमानोलूककलकलं, धृष्टद्युम्नवीर्य्यमिव कुण्ठितद्रोणप्रभावं, नन्दनवनमिव सञ्चरत्कौशिकं, कृष्णवर्त्मेवाखिलकाष्ठापहारकं, सगर्भमिव घनतरपाषाणकर्क्कशासु गिरितटीषु, सचक्षुरिव सिंहनयनदीधितिच्छटाकपिलेषु सानुषु, सजीवमिव तमोमणिभिः, संवर्द्धित-

मालिन्येन साम्यात् प्रतिहस्ततोत्प्रेक्षणम् ; प्रभौ परासूते क्षुद्रः परहस्तदारादीन् समया स्वभृत्यान् लक्ष्मीनिगूहनया प्रेषयत्येवेति लोकप्रसिद्धो ध्वनितः। रविविरहविधुरास्तत एव विकलकुररीरुतच्छलेन पक्षिविशेषप्रबन्धमिषेण, विलपन्तीष्विव सरोजिनीषु। गणके इव दैवज्ञे इव, नक्षत्रसूचके शुभाशुभकार्य्योपयोग्यश्विन्यादिनक्षत्रसूचके ; पक्षे— नक्षत्राणि ताराः, तत्सूचके द्योतके, प्रदोषे, ("दैवज्ञगणकावपि" इत्यमरः)। हरस्य कण्ठकाण्डं गलस्तम्भः, तत्कान्तिमलिनानि। दैत्यबलमिव प्रकृष्टः श्रेष्ठः, तारको दैत्यविशेषो यत्र ; ("काण्डं चावसरे वाणे नाले स्कन्धे च शाखिनाम्। स्तम्बे दर्भादि- ष" इति वररुचिः) पक्षे—प्रकृष्टास्तारका भौमादिनक्षत्राणि यत्र, तथा च माघः,— "अविदितास्तमयाऽपि ददृशेऽपि न यः स तमो तमोभिरधिगम्य ततान। द्युतिमपोढ- ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः॥" भारतसमरमिव वर्द्धमान उलूकस्य कुरुयोधविशेषस्य शकुनिपुत्रस्य, कलकलो यत्र ; पक्षे—उलूकाः पेचकाः, ("उलूकः कुरुभेदेऽपि पेचके नागभेदिनि" इति विश्वः) [सङ्ग्रामे प्रयोजनमर्थादुह्य इत्यण्]। धृष्टद्युम्नवीर्य्यमिव द्रुपदपुत्रवीर्य्यमिव, कुण्ठितो द्रोणस्याचार्य्यस्य, प्रभावो येन ; पक्षे— कुण्ठितो द्रोणानां काकानां, प्रभावो यत्र, ("द्रोणो ना दग्धकाके स्यादश्वत्थाम्नो गुरावपि" इति रुद्रः)। नन्दनवनमिवेन्द्रवनमिव, सञ्चरन् कौशिक इन्द्रो यत्र ; पक्षे—कौशिका उलूकाः, ("कौशिकः पेचके शक्रे विश्वामित्रे च कौशिकः" इति विश्वः)। कृष्णवर्त्मेवाखिलकाष्ठानामिन्धनानाम्, अपहारकम् ; पक्षे—काष्ठा दिशः, तासामपहारकमाच्छादकम् ; यद्वा—कृष्णवर्त्मानमिव दुराचारमिव, अखिलकाष्ठा- नामखिलोत्कर्षाणाम्, अपहारकं नाशकं, ("कृष्णवर्त्मा हुताशे स्याद्दुराचारे विधुन्तुदे"। "काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। आदिश्य स्थानमात्रे च काष्ठमाख्यात- मिन्धने॥" इति विश्वप्रकाशः)। सगर्भमिव ससत्त्वमिव, आधिक्यमिति यावत्, क्वचित् सगर्वमित्यपि पाठः, घनतराः पाषाणाः कर्कशाश्च यत्र तासु गिरितटीषु, "ढाकुर" इति भाषायाम्। सचक्षुरिव सिंहनेत्रदीधितिच्छटाकपिलेषु सानुषु ;

मिवाग्निहोत्रधूमलेखाभिः, मांसलितमिव कामिनीकेशपाश-संस्कारागुरुधूमपटलैः, उद्दीपितमिव घनतरलीनमधुकर-पटलमेचकितपेचकिकपोलतलदानधाराशीकरैः, पुञ्जीकृतमिव विततमालमालाच्छायासु, लीयमानमिव कज्जलश्यामभोगि-भोगेषु, प्रावरणमिव रजनीपांशुलायाः, पलितौषधमिव वृद्ध-वारविलासिन्याः, अपत्यमिव रजन्याः, सुहृदिव कलिकालस्य, मित्रमिव दुर्जनहृदयस्य, बौद्धदर्शनमिव प्रत्यक्षद्रव्यमपह्नुवानं, तिमिरं व्यजृम्भत।

---

सुप्रसिद्धेति पाठस्तु भ्रामकत्वादुपेक्षितः। तमोमणिभिर्ज्योतिरिङ्गणैः, खद्योतैरिव, इतस्ततो भ्रमणादिति भावः, ("ध्वान्तोन्मेषखद्योततमोमणिज्योतिरिङ्गणाः" इति व्याडिः)। अग्निहोत्रधूमलेखाभिः संवर्द्धितमिव। कामिनीकेशपाशसंस्कारार्थमगुरु-धूमपटलानि तैर्मांसलो बलवान्, तद्वदाचरितमिव, [भिन्नादित्वात्] ("बलवान् मांसलोंऽसलः" इत्यमरः)। घनतरं निविडतरं, लीनानामुपविष्टानां, मधुकराणां पटलैर्मेचकितानां श्यामवदाचरितानां, पेचकिनां गजानां, कपोलतलदानधारा-शीकरैरुद्दीपितमिव, ("उलूके करिणः पुच्छ-मूलोपान्ते च पेचकः"। "काल-श्यामलमेचकाः" इति द्वयोरप्यमरः) प्रोद्दीप्तिः। वितता या तमालमाला तच्छायासु पुञ्जीकृतमिव। कज्जलश्यामभोगिभोगेषु सर्पशरीरेषु, लीयमानमिव। रजनीपांशुलाया रात्रौ कृष्णाभिसारिकायाः, प्रावरणमिव, ("स्वैरिणी पांशुला च स्यात्" इत्यमरः)। वृद्धवारविलासिन्याः पलितस्य जराकृतकेशशौक्ल्यस्य, औषधं तन्निवारकमिव, अन्धतमसे केशानां विशेषानुपलम्भादिति भावः, पलितं वेश्यानां जीविकाभङ्गहेतुरिति ता एव वर्णिताः, ("पलितं जरसा शौक्ल्यं केशादौ" इत्यमरः)। रजन्या रात्रेः, अपत्यमिव, तत उद्भूतत्वादिति भावः। कलिकालस्य सुहृदिव, सदाचारनाशकत्वान्मालिन्याच्च साम्यात् सुहृत्त्वम्। दुर्जन-हृदयस्य मित्रमिव। बौद्धदर्शनमिव बौद्धशास्त्रमिव, प्रत्यक्षमपि चक्षुरिन्द्रियगोचरमपि, न तु परमाण्वादिवदतीन्द्रियं, द्रव्यमपह्नुवानं, सर्वं ज्ञानमयं जगदिति मन्य-मानास्ते—"सूर्याचन्द्रमसौ व्योम ताराचक्रं वसुन्धरा। सरितः सागराः शैला-श्चित्तस्यैव विभूतयः॥" इति प्रत्यक्षपरिकल्पितमप्यर्थमन्यथयन्ति।

मुदितमिवातिमत्तमातङ्गमनोहरगण्डमण्डले, फलितमिवातिसान्द्रचन्द्रच्छदविततमालतमालकानने, स्फुरितमिवातिकान्तकान्ताजनघनतरकेशपाशसंहतौ, मिलितमिवेन्द्रनीलमणिरश्मिभिः, अतिशयमांसलं तम इवावटतटाटवीषु, साटोपमिव स्फुटपाटवोत्कटप्रकटविशङ्कटकुटजविटपोत्कटविनटितषट्पदालिषु, घनतरघोरघस्मरविषधरभोगभासुरं, मदभरमत्तदन्तिदन्तद्युतितर्जनजर्जरं तमः।

निशाकरारम्भसमये इव सङ्कुचत्कुवलयव्याजेन विरचिताञ्जलिपुटे नतिमति तमोतिमिरे क्षणेन च सन्ध्याताण्डवाडम्बरोच्छलितमहानट-जटाजूट-कूटकुटिलविवर-विवर्त्तित-जह्नुकन्या-वारिधाराबिन्दव इव विकीर्णाः, दुर्द्धरधरणिभारभरभुग्नभोम-

---

अतिमत्तमातङ्गमनोहरगण्डमण्डले मुदितमिव हृष्टमिव। अतिसान्द्रचन्द्रच्छदविततमालतमालकानने फलितमिव। अतिकान्तकान्ताजनघनतरकेशपाशसंहतौ स्फुरितमिव। इन्द्रनीलमणिरश्मिभिर्मिलितमिव। अतिशयमांसलं तमः अवटा गर्त्ताः, तटाः अटव्यश्च तास्वत्रामिव, ("अवटः स्यात् खिले गर्त्ते कूपे कुहकजीविनि" इति विश्वप्रकाशः)। स्फुटं पाटवं पटुत्वं, तेनोत्कटमुद्ग्रः प्रकटो व्यक्तः, विशङ्कटो महान्, यः कुटजविटपकस्तोत्कटविनटितषट्पदालिषु साटोपमिव साहङ्कारमिव; ("विकटः सुन्दरे प्रोक्तो विशालविकरालयोः" इति विश्वप्रकाशः। "विशङ्कटं पृथु बृहत्" इत्यमरः)। घनतरं घोरं भयानकं, घस्मरो भक्षकः, यो विषधरस्तद्भोगभासुरम्; ("घोरं भीमं भयानकम्"। "भक्षको घस्मरोऽद्मरः" इत्युभयत्राप्यमरः) [ "स्फटः फणः कायश्च भोगः" ]। मदभरमत्तदन्तिदन्तद्युतितर्जनेन जर्जरं शिथिलावयवं तमः; मदमत्त इति विशेषणं गजानां ताडनशीलताय, तत्र दन्तयोः श्वैत्याय।

निशाकरारम्भसमये चन्द्रोदयारम्भसमये, सङ्कुचत्कुवलयव्याजेन विरचिताञ्जलिपुटे इव, अत एव नतिमति नम्रे, तमोतिमिरे सति क्षणेन तारका व्यराजन्तेत्यन्वयः। पूर्वं तमःप्रारम्भे ता एव वर्णिताः, इदानीं चन्द्रोदयप्रारम्भे इति न किञ्चिदसमञ्जसम्। सन्ध्यासु ताण्डवं नृत्यं, तस्याडम्बरः समारम्भः, तेनोच्छलिते महानटस्य शम्भोः, जटा-जूटकूटकुटिलविवरे विवर्त्तिता या जह्नुकन्या गङ्गा, तस्याः वारिधाराबिन्दवो

दिग्मत्तमातङ्गमण्डलकरपरिमुक्तशीकरच्छटा इव, अतिदवीयो-नभस्तलभ्रमणखिन्नदिनकरतुरगवान्तफेनस्तबका इव, गगन-महासरःकुमुदकाननसन्देहदायिन्यः, विश्वं गणयता विधातुः शशिकठिनीखण्डेन तमोमषीश्यामेऽजिने इव नभसि संसार-स्यातिशून्यत्वाच्छून्यबिन्दव इव, वितता जगत्त्रयविजयविनिर्गतस्य मकरकेतो रतिकरतलविकीर्णलाजा इव, गुटिकास्त्रगुलिका इव पुष्पधन्वनः, वियदम्बुराशिफेनस्तबका इव, रतिविरचिता गगनाङ्गणे आतर्पणपञ्चाङ्गुलय इव, विकीर्णा व्योमलक्ष्मीहार-मुक्तानिकरा इव, चन्द्रचिताचक्रादात्यावेगव्यस्ताः कामकीकस-खण्डा इव, तिमिरोद्गमधूमधूमलसन्ध्याऽनलपरितप्तगगनमहा-

---

इव विकीर्णा विस्तृताः; ("ताण्डवं नटनं नाट्यम्" इत्यमरः। "आडम्बरः समारम्भे गजगर्जिततूर्ययोः" इति विश्वप्रकाशः)। दृढंधरणिभारभरसमर्थमादि[illegible]-मातङ्गमण्डलं समूहः, तत्करैः शुण्डाभिः, परिमुक्ताः शीकरच्छटाः अम्बुकणच्छटाः, ता इव; ("करो वर्षोपले पाणौ शुण्डाप्रत्ययरश्मिषु" इति विश्वप्रकाशः)। अतिदवीयो दूरं, नभस्तलं तत्र भ्रमणेन खिन्ना दिनकरतुरगास्तैर्वान्तफेनस्तबका इव; ("दवीयश्च दविष्ठं च सुदूरं" इत्यमरः)। गगनमहासरसः कुमुदकाननसन्देहदायिन्यः, तत्तुल्या इत्यर्थः। विश्वं गणयतो विधातुस्तमोमषीश्यामेऽजिने चर्मणीव, नभस्याकाशे, शशी चन्द्र एव, कठिनी खटिका, तस्याः खण्डेन शकलेन, रचिता इति शेषः, संसारस्यातिशून्यत्वात् नश्वरत्वेनेत्यर्थः, शून्यबिन्दव इव; ("कठिनी खटिकायां तु" इति विश्वप्रकाशः)। जगत्त्रयविजयार्थं विनिर्गतस्य मकरकेतोः कामस्य, रतेः प्रियायाः, करतलविकीर्णलाजा इव। पुष्पधन्वनो गुटिकास्त्रं "गुलैल" इति भाषया, तस्य गुलिका इव, "गुलिया" "गोली" इति वा इयं भाषायाम्। वियदम्बुराशेः फेनस्तबका इव। गगनाङ्गणे रतिविनिर्मिता आतर्पणम् "आलिपन" इति भाषया, तस्य पञ्चाङ्गुलयः "चुटकी" इति भाषया, ता इव, उत्सवादावातर्पणेनाङ्गुली रञ्जयित्वा कुड्यादि रञ्जयन्तीति सम्प्रदायः; ("आतर्पणं च सौहित्ये विन्यादालिम्पनेऽपि च" इति विश्वप्रकाशः)। विकीर्णा विक्षिप्ताः, व्योमलक्ष्म्या हारमुक्तानिकरा इव। चन्द्र एव चिताचक्रं तस्मादात्यावेगेन व्यस्ता इतस्तत उत्पतिताः, कामकीकसखण्डाः कामास्थिखण्डाः, ते इव, ("चिता चित्या चितिः स्त्रियाम्"।

स्थलीकटाहभृज्यमानलाजानुकारिण्य इव तारका व्यराजन्त। ताभिः श्वित्रितमिव वियदशोभत। दीर्घोच्छ्वासरचनाकुलं सुश्लेषवक्त्रघटनापटु सत्कविवचनमिव चक्रवाकमिथुनमतीवाखिद्यत। कमलिनीवन-सञ्चरणालग्न-मकरन्दविन्दुलुब्ध-मुग्ध-मधुकरमाला-शबलगात्रं, कालपाशेनेव मूर्त्तरामशापेनाकृष्यमाणं, चक्रवाकमिथुनं विजघटे। रविविरहविधुरायाः कमलिन्या हृदयमिव द्विधा पपाट चक्रवाकमिथुनम्। आगमिष्यतो हिमकरदयितस्य पार्श्वं सञ्चरन्ती कुमुदिन्या भ्रमरमाला दूतीवालक्ष्यत। तारका-

---

"कोष्ठं कुक्ष्यमभ्र्यि च" इति द्वयोरप्यमरः)। तिमिरमेव धूमलेन धूमलः कृष्णलोहितः, सन्ध्यैवानलो वह्निः, तेन परितप्ते गगनमहास्थल्येव कटाहस्तत्र भृज्यमानलाजानुकारिण्यः, ("धूम्रधूमलौ कृष्णलोहितः" इत्यमरः)। ताभिस्ताराभिः, श्वित्रितं सञ्जातकुष्ठमिव, वियदराजत, ("कोठो मण्डलकं कुष्ठं श्वित्रः" इत्यमरः) खचितमिति पाठे—सञ्जातखचितम्। दीर्घोच्छ्वासो दीर्घपरिच्छेदः, तद्रचनया आकुलं व्याप्तम्; यद्वा—दीर्घोच्छ्वासरचनानां कुलं गृहं, शोभनः श्लेषोऽलङ्कारो गुणविशेषो वा, वक्त्रं छन्दोभेदः, तद्रचनापटु सत्कविसत्काव्यमिव; पक्षे—दीर्घोच्छ्वासस्य महोच्छ्वसनस्य, रचनया आकुलं व्याकुलम्; सुश्लेषवक्त्रघटना शोभनः श्लेष आलिङ्गनं यत्र तादृशी, वक्त्रघटना मुखसंयोजनं, तत्र पटु चक्रवाकमिथुनमतीवाखिद्यत, ("आख्यायिका परिच्छेद आश्वासोच्छ्वासकावपि" इत्युत्तरतन्त्रम्। "कुलं जनपदे गृहे। सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्॥" इति विश्वप्रकाशः) "एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः। तन्त्रेण यत्र शब्दज्ञैः श्लेष इत्यभिशब्दितः॥" इति भोजराजः। "श्लिष्टमस्पृष्टशैथिल्यम्" इति गुणप्रकरणे दण्डी। "वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्" इति केदारः। ("पटुस्तीक्ष्णेऽस्फुटे दक्षे निष्ठुरे निर्दयेऽपि च" इति रुद्रः)। कमलिनीवनसञ्चरणेऽलग्नमकरन्दविन्दुषु लुब्धा सतृष्णा, मुग्धा रम्या, मधुकरमाला तया शबलं चित्रं, गात्रं यस्य तत्। कालपाशेनेव मूर्त्तरामशापेन आ सम्यक्, यथा रात्रौ न मिलतस्तथा कृष्यमाणं चक्रवाकमिथुनं विजघटे विघटितम्। रविविरहविधुरायाः कमलिन्या हृदयमिव चक्रवाकमिथुनं द्विधा पपाट, [पट पट गतौ]। कुमुदिन्याः पार्श्वं सञ्चरन्ती भ्रमरमाला आगमिष्यतो हिमकरदयितस्य चन्द्रप्रियस्य, दूतीवालक्ष्यत, [लक्षरलो-

व्याजादस्तङ्गतस्य दिवाकरस्य शोकादिव स्थूलाम्बुविन्दुभिः ककुभो व्यरुदन्। भास्वतो निजदयितस्य विरहादभिनव-किञ्जल्कराजिव्याजेन मुर्मुर इव नलिनी कोषहृदये जज्वाल। रविरश्मिभस्मितनभोवनमसीराशिरिव, श्रुतिवचनमिव परिहृतदिगम्बरदर्शनं, सद्यो द्रावितराजपट्ट इव, समुद्रप्रवाह इव, शार्वरमन्धकारं व्यजृम्भत।

क्षणेन च क्षणदाराजकन्यकाकन्दुकः, कन्दर्पकनकदर्पणः, उदयगिरिबालमन्दारपुष्पस्तबकाकृतिः, प्राचीललाटतटकुङ्कुमबिन्दुचक्राकारः, कनककुण्डलमिव नभःश्रियः, दिव्यवधू-प्रसाधिकाहस्तस्रस्तालक्तकपटलमिव, गगनसौधकनककुम्भ इव, प्रस्थानकनककलश इव त्रिभुवनविजयविनिर्गतस्य मकरकेतोः,

---

स्य तृतीयान्तेन योगाभावात "समस्तृतीयायुक्तात्" इति नात्मनेपदम् ]। अस्तङ्गतस्य दिवाकरस्य शोकात् ककुभः स्थूलाम्बुबिन्दुव्याजेन व्यरुदन्। कमलिनी कोषहृदये भास्वतो निजदयितस्य विरहादभिनवकिञ्जल्कराजिव्याजेन मुर्मुर इव तुषानल इव, जज्वाल, ("मुर्मुरस्तु तुषानले" इति वैजयन्ती)। रविरश्मिभस्मितनभोवनस्य मसीराशिरिव। श्रुतिवचनमिव वेदवाक्यमिव, परिहृतं दिगम्बरस्य बौद्धस्य, दर्शनं शास्त्रं येन तत् ; पक्षे—दिगम्बरयोः दिगाकाशयोः, दर्शनं येन तत्. शार्वरं शर्वरीसम्बन्धि. [ ... विवक्षायामण्। भवे तु ठञ् स्यात् ] एवं शार्वरस्य तमसो विशेषणानि इत्यादयो व्याख्याताः। तमो व्यजृम्भत।

क्षणेन ... । क्षणदा राजकन्या कन्दुको गेन्दुकः, ("गेन्दुकः कन्दुकः" इत्यमरः) "गेन्दा" इति "गालसमुरिया" इति भाषायाम्। कन्दर्पस्य कनकदर्पणो मुकुरः, ("दर्पणे मुकुरादर्शौ" इत्यमरः) कनकपदं रक्तत्वेन साम्यार्थम्। उदयगिरेर्बालमन्दारपुष्पस्तबको नवमन्दारगुच्छकः, तदाकृतिः, ("स्याद्गुच्छकस्तु स्तबकः" इत्यमरः) बालपदमारक्ततातिशयाय। प्राचीललाटतटे कुङ्कुमबिन्दुचक्रवदाकारो यस्य, ("अथ कुङ्कुमम्। काश्मीर-जन्माग्निशिखम्" इत्यमरः)। नभःश्रियः कनककुण्डलमिव कर्णवेष्टनमिव, ("कुण्डलं कर्णवेष्टनम्" इत्यमरः)। दिव्यवधूनां प्रसाधिका तद्धस्तात् स्रस्तमलक्तकपटलमिव

कन्दर्पकार्त्तस्वरतूणमुखकान्तितस्करः, प्राच्यशैलशिखराग्रप्ररूढ़जपाकुसुमच्छविः, स्वच्छकुङ्कुमपिण्डपूर्णपात्रमिव निशाविलासिन्याः, कुङ्कुमारुणैकस्तनकलश इवाखण्डलाशाङ्गनायाः, क्षीरसिन्धुरिव हरिणाधिष्ठितः, राम इव लक्ष्मणान्वितः, सुग्रीव इव तारापतिः, सुराजेव रक्तमण्डलः, उदयारुणमण्डलः, रजनीपतिरुदयमाससाद। ततः कामिनीहृदयसङ्क्रामित इव, चकोराङ्गनानेत्रपुटपीत इव, रक्तकुमुदकोषलीढ़ इव, क्षीणतां क्षणदाक्रान्तो जगाम रागः।

अनन्तरं शर्वरीव्रजाङ्गनाऽऽविष्कृतनवनीतस्वस्तिक इव, कुसुमकेतोः मुखच्छायामुद्रितमुकुर इव, श्वेतातपत्रमिव मकरकेतोः, दन्तपालिचक्रमिव वियन्महाऽसेः,श्वेतचामरमिव मदन-

गमनेति स्पष्टम्। प्रस्थानकलकेति च। कन्दर्पस्य कार्त्तस्वरतूणमुखकान्तेः सुवर्णनिषङ्गमुखशोभायाः, तस्करोऽपहारकः, तच्छ्रेष्ठत्वादिति भावः, ("तूणोपासङ्गतूणीरनिषङ्गाः" इत्यमरः)। प्राच्यां भवः प्राच्यः शैलस्तच्छिखराग्रे प्ररूढ़ जपाकुसुमं तच्छविः, ["द्युप्रागपा" इति यत्] ("ओड्रपुष्पं जपापुष्पम्" इत्यमरः)। स्वच्छकुङ्कुमेन पिण्डं सान्द्रं, पूर्णपात्रमिव निशाविलासिन्याः, ("पिण्डं सान्द्रे बले काले तुल्येऽपि परिकीर्त्तितम्"। "पूर्णपात्रं वस्त्रपूर्ण-पात्रे वर्द्धापकेऽपि च" इति द्वयोरपि विश्वः) कुङ्कुमारुणैकस्तनकलश इवाखण्डलाशाङ्गनाया इन्द्रदिगङ्गनायाः, ("आखण्डलः सहस्राक्षः" इत्यमरः)। क्षीरसिन्धुरिव हरिणा विष्णुना, अधिष्ठितः; पक्षे—हरिणेन। राम इव लक्ष्मणेनानुगतः; पक्षे—लक्ष्मणा चिह्नेन। सुग्रीव इव तारा तन्नामिका स्त्री; पक्षे—तारा नक्षत्राणि। सुराजेव रक्तं मण्डलममात्यादिनमूहो यस्य; पक्षे—मण्डलं बिम्बम्। उदयेनारुणं मण्डलं बिम्बं यस्य सः। ततः कामिनीहृदये सङ्क्रामित इव। चकोराङ्गनाभिर्नेत्रपुटैः पीत इव। रक्तकुमुदकोषैर्लीढ़ इवास्वादित इव। क्षीणतां जगाम क्षणदाक्रान्तो रागश्चन्द्रमण्डलस्थं लौहित्यम्।

अनन्तरं उडुपतिश्चन्द्रः, उज्जगाम। शर्वरी व्रजाङ्गना गोपी, तया आविष्कृतः नवनीतस्य स्वस्तिकचतुष्कमिव, "चौक" इति भाषायां, ("नवनीतं नवोद्धृतम्" इत्यमरः। "स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः" इति विश्वप्रकाशः)।

महाराजस्य, वालुकापुलिनमिव निशायमुनायाः, स्फाटिक-लिङ्गमिव गगनमहातापसस्य, अण्डमिव कालोरगस्य, कम्बुरिव नभोमहार्णवस्य, चैत्यमिव मदनारिदग्धस्य मकरकेतोः, चिता-चक्रमिव कलङ्काङ्गारशबलं सङ्कल्पजन्मनः, गगनगामिगङ्गा-पुण्डरीकमिव, अम्बरमहार्णवफेनपुञ्ज इव, पारदपिण्ड इव कालधातुवादिनः, राजतकलश इव दूर्वाप्रवालशबलः, कन्दर्परथ-चक्रचारुः, अम्बरप्रासादस्य पारावत इव, उदयाचलचारुचूडा-मणिरिव, ऐरावतलुप्तसिन्दूरकुम्भस्थलमिव, भग्नशृङ्गपुराण-गोमुण्डखण्ड इव तारकाश्वेतगोधूमशालिनो नभःक्षेत्रस्य,

कुसुमकेतोर्मुखच्छायाप्रदर्शने मुकुर इव। मकरकेतोः श्वेतातपत्रमिव। विद्युन्महा-ऽसिताकाशखड्गस्य, (पालयतीति पालः, पाल एव पालकः, स्वार्थे कः) दन्तस्य गजदन्तस्य, पालिर्गजदन्तमयः कहारेति ख्यातः। मदनमहाराजस्य श्वेतचामरमिव, ("चामरं तु प्रकीर्णकम्" इत्यमरः)। निशायमुनाया वालुकापुलिनमिव। गगन-महातापसस्य स्फाटिकलिङ्गमिव पूजार्थं स्फटिकमयशिवलिङ्गमिव। काल एवोरगः कालोरगः, तस्याण्डमिव। नभोमहार्णवस्य कम्बुरिव शङ्ख इव। मदनारिणा शिवेन, दग्धस्य मकरकेतोश्चैत्यमिव, ("चैत्यमायतने बुद्धबिम्बे चोद्देश्यपादपे" इति विश्वः)। कलङ्काङ्गारः, यद्यपि "अङ्गारोऽलातमुल्मुकम्" इत्यमरः, साग्निकाष्ठमङ्गारः, "अङ्गारचुम्बितमिव व्यथमानमास्ते" इति प्रयुक्तं भवभूतिना, तथाऽपि निरग्निप्र-दग्धं श्यामं काष्ठमिहाङ्गारपदेन विवक्षितं योग्यत्वात्, "कोइला" इति भाषायां, तेन शबलं चिताचक्रमिव सङ्कल्पजन्मनः; एतादृशेऽर्थे श्रीहर्षेण टीकाय "इङ्गाल"शब्दः प्रयुक्तः, "वितनुरिङ्गालमिवायशः परः" इति)। गगनगामिगङ्गाया मन्दाकिन्याः, पुण्डरीकमिव सिताम्भोजमिव, यदेव वक्तव्यं तदेव वक्ष्यते। अम्बरं व्योमैव, महार्णव-स्तत्फेनपुञ्ज इव। कालधातुवादिनः पारदपिण्ड इव। दूर्वाप्रवालशबलो राजत-कलश इव, दूर्वाप्रवालेति कलङ्कसाम्याय। कन्दर्परथचक्रचारुः। अम्बरमेव प्रासादो राजगृहं, तस्य पारावत इव, (गृहप्रकरणे "प्रासादो देवभूभुजाम्"। "पारावतः कलरवः कपोतः" इति द्वयोरप्यमरः)। उदयाचलचारुचूडामणिः। ऐरावतस्य लुप्तसिन्दूरं मृष्टसिन्दूरं, कुम्भस्थलमिव। श्वेतगोधूमैः, श्वेतत्वं तारासाम्याय, "काबिली गोहूं" इति भाषायां, शालिनः शोभमानस्य, नभःक्षेत्रस्य भग्नशृङ्गः, भग्न-

मलयजपिण्डपाण्डुरराजतपात्रमिव सिद्धाङ्गनाहस्तस्रस्तं, ग्रहपतिरुज्जगाम। यश्च पुण्डरीकं लोचनमधुकराणां, शयनीयसैकतमिव चित्तहंसानां, स्फाटिकव्यजनं विरहवह्नीनां, श्वेतशाणचक्रं मन्मथसायकानाम्।

अत्रान्तरेऽभिसारिकासार्थप्रहितानां प्रियतमान् प्रति दूतीनां द्व्यर्थाः सेर्ष्याः सप्रपञ्चा विकारभङ्गुराः प्रवादा बभूवुः। तथा हि, अवस्त्रीकृतमात्मानं नाकलयसि तत्त्वतः? कान्त!

---

विषाणत्वं वर्त्तुलत्वार्थं, पुराणशर्मरहितः, गोमुण्डखण्ड इव, सौमाभिमांशार्थे स्थावे वा चैव गोमुण्डः समारोप्यते। सिद्धाङ्गनाहस्तात् स्रस्तं भ्रष्टं, मलयजेन शुष्कचन्दनेन, पिण्डं चूर्णम्, अत एवातिपाण्डुरं राजतपात्रं रौप्यपात्रमिव ; यद्वा—मलयजपिण्डैर्बृहच्चन्दनगुटिकाभिः, पाण्डुरमित्यादि ; उभयत्र अंशुनवर्णनं चन्दनपङ्कबिन्दवो गुटिका वा तारा विकीर्णा इति ध्वनयितुम्। लोचनमधुकराणां पुण्डरीकमिव ; वर्त्तुलत्व-सामितसाम्यार्थं विकासपर्य्यन्तमादाय कुमुदम्, एवं पूर्वत्रापि। चित्तहंसानां शयनीयसैकतमिव शयनार्हसिकतामयदेश इव। विरहवह्नीनां स्फाटिकव्यजनं, तन्निर्वापकत्वादिति भावः, अत्र व्यजनं वर्त्तुलमग्निसन्धुक्षकं विवक्षितं, "छितनी" इति भाषायाम्।

अत्रान्तरे मानिनीमानपाटनपटुकुमुदिनीकान्तोदयावसरे, अभिसारिकासार्थ-प्रहितानां ज्योत्स्नाऽभिसारिकासमूहप्रेषितानां, दूतीनामन्योऽन्यसङ्घट्टनविरह-निवेदनादिकर्मकुशलानां, प्रियतमान् प्रति वल्लभान् प्रति, द्व्यर्थाः उपालम्भाऽऽवर्जन-रूपार्थद्वयोपेताः, सेर्ष्याः उपालम्भे, विकारैर्मदनविकारजन्यावस्थान्तरविशेषैः, भङ्गुरा नानावस्थायामिव न केवलं परुषा एवापि तु किञ्चित्स्वापराधव्यञ्जका इत्यर्थः, आवर्जने इदम् ; सप्रपञ्चा वक्रोक्त्यादिसहिताः, प्रवादाः प्रकृष्टवैदग्ध्यविशिष्टा वादाः, बभूवुः, ("स्वार्थिनी तु सङ्केतं याति या साऽभिसारिका" इति रसरत्नहारः)। उपालम्भं प्रथयन्त्यः अवस्त्रीत्यादि स्वगुणं प्रकटयन्त्याह, अवस्त्रीकृतं कौपीनावशेषीकृतम्, [ अनुदरा कन्येतिवदल्पतायाम् नञोऽर्थः, उक्तं च—"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥" इति ] आत्मानं तत्त्वतो नाकलयसि? न जानासि? यथा धनञ्जयः कामभञ्ज्यां मल्लनर्त्तकवेषो बभुपालितो-ऽपवाहितस्तथा त्वमपि का मतिर्भविष्यतीति शङ्के, आत्मानमित्यादि ; यद्वा—

स्त्रीणां कृतं कार्मणादि कर्म, [कृतमिति कृञः कर्मणि क्तः] तत्त्वतो नाकलयस्यत आत्मानमेव रक्ष; यथा कामप्रयुक्तो आत्मानमवन् रक्षन् स मद्वाक्यैर्मोहितः मेषक इव परिभ्रामितस्तथा त्वमपि भ्रमिष्यसीति ज्ञात्वा आत्मानमवेति; स्फुटं चेतद्वृत्तान्तमं-चरिते; ("मूलकर्म तु कार्मणम्" इत्यमरः) वैधिकं मन्त्रमभिधाय कृतकाटाक्षं मत्वाऽभिदधे—आत्मानं प्रच्यवतोऽथवा, [अवेः कर्त्तरि तृच्] मा याता स्त्री अन्यदत्ता. तथा कृतमवस्त्रीकृतं नीचनारीकर्म, भृङ्गकीटन्यायादपि स्त्रीनिषेवणात् त्वं स्त्रीव परेऽर्थयसे इति गदति—अवेत्यादि, अवस्त्रीकृतं अधमयोषित्कृतम्, आत्मानं तत्त्वतो नाकलयसि; आवर्जने—सितत्वतो बद्धत्वाद्धेतोः, [षिञ् बन्धने, क्तः] त्वमेव मम प्रिया नान्येत्येव शपथ इति शपथकपथाद्यादित्यर्थः, [सितत्वत इत्यत्र "झयो झरि" इति पाक्षिकस्तकारलोप इति तु मागढस्य प्रमाद एव, "अनचि च" इति तकारद्वित्वे रूपसाम्यं बोध्यम्] अवस्त्रीभ्यो नीचस्त्रीभ्यः, कृतं पर्याप्तम्, आत्मानं नाकलय मा जानीहि, मत्सख्येव त्वामभिलषते इति त्वं नीचनारीरक्तो मा भूरिति भावः, ("कृतं युगेऽपि पर्याप्ते विहिते हिंसिते फले" इति विश्वप्रकाशः) कं सुखं, सुखकारी, लयः संश्लेष आलिङ्गनं विलासो वा यस्य सः, न कलयोऽकलयः, न अकलयो नाकलयः, त्वत्तो मत्सख्या अन्यस्याः, सितं बद्धं, स्त्रीकृतं स्त्रीभ्यः पर्याप्तम्, आत्मानम्, अत्र प्रीणय, मत्सख्या सह रतिं विधायात्मानं सन्तोषयेति भावः; ("कं मूर्द्धसुखवारिषु" इति। "लयो विलासे संश्लेषे" इति च विश्वप्रकाशः) यद्वा—नाकस्य दुःखस्य, लयः संश्लेषः, सम्बन्धो यस्य, ("अकं पापे च दुःखे च" इति विश्वः) यद्वा—अस्य वासुदेवस्य, वो वक्षोऽवः, तस्य स्त्री लक्ष्मीः, तया कृतं पर्याप्तम्, अवस्त्रीकृतं लक्ष्मीपूर्णम्, आत्मानं तत्त्वतो नाकलयसि ? जानासि चेत् कथं तां परित्यज्यान्यवाञ्छको भवसि ? ("अकारो वासुदेवः स्यात्"। "वक्षः-स्थले च वः प्रोक्तः" इत्येकाक्षरद्वयम्) "यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्" इत्यनु-शासनाद्भिदाभावेनावार्थान्तरवर्णनम्; यद्वा—सितत्वतो बद्धत्वाद्धेतोः, अर्थात् तथा प्रेम्णा बद्धत्वादवस्त्रीकृतमात्मानं नाकलय, सा किल त्वां धनेनाप्यविष्यतीति व्यङ्ग्यम्; यद्वा—सितत्वाद्धतो बन्धविशेषबद्धत्वात्, स्त्रीकृतमात्मानं नाकलय, अथ तत्समीपे गच्छ; यद्वा—नाकस्येवाकाशस्येव, लयः संश्लेषो यस्य, निरर्थकसम्बन्ध इत्यर्थः, ("आकाशे त्रिदिवे नाकः" इत्यमरः) यद्वा—केन सुखेन, लयो विलासः, तेन सितो बद्धस्तत्सम्बोधनम्; त्वत्तोऽन्यस्य स्त्री न, [सर्वनाम्नोरन्यार्थकयोस्त्वत्तो-स्तसिलन्तस्य पञ्चम्यन्तस्य प्रयोगो यथायथं बोध्यः] यथा पतिव्रतया नान्यपतिः सेव्यते, एवं पराङ्गना विदग्धेन सेवनीयेत्यर्थः, कृतं मिथ्याभाषणादिना हिंसितम्,

प्रस्तर इव क्रूरोऽसि, न चाकर्षकचुम्बकद्रावकेष्वेकोऽसि, भ्रामकोऽसि परम्। कितव! धर्मार्थान्यप्रयुक्तः क्षेपणिक इव मुधा

---

आत्मानमेव खेलय, स्वल्पसम्भाषणात् तेजोऽभिवृद्धिर्जायते इति तदाचरेति व्यङ्ग्यम्; [कृञ् हिंसायाम्] यद्वा—के जले, खयो विलासः, तेन खितावगतः जलक्रीडा-विदितः, ("खितस्त्वशिते बद्धे सिता शर्करा" इति हैमः। "खितः समासे भवति विलस्यज्ञातयोरपि" इति विश्वप्रकाशः) यद्वा—नाके स्वर्गे, खयो विलासो येषां ते नाकखया देवाः, तद्वत् खिताऽवगतः; यद्वा—अवस्वीकृतं त्वयोद्दिमितम्, आत्मानं तत्त्वतो नाकलयसि? पूर्वं तयैव धनदानादिना सर्वस्वहरणीयतामापादितः, इदानीं तामेवायामयसि? सा दरिद्रावस्था ते किं विस्मृता? इति व्यङ्ग्यम्; कस्य जलस्य, खयो विलासो नौचगमनरूपः, तेन खितावगत नौचगमनप्रसिद्ध, स्वीकृतं स्वोद्दिमितम्, आत्मानमेव; यद्वा—अकारो वासुदेवः, तेन तुल्यमेव, इवार्थे वः, अव कृष्ण इव, स्वीकृतं स्वोपघ्नातम्, आत्मानं तत्त्वतो नाकलयसि? अस्माभिः सह क्रीडां करोषि चेत् कुरु, परन्तु मत्सख्याऽपि सह क्रीडां कुर्विति भाव, ("व वा यथा तथैवैवं साम्ये" इत्यमरः) यद्वा—खितस्त्वतो धवलत्वाद्धेतोरेव, कृष्ण इव स्वीकृतं स्वोपघ्नातम्, आत्मानं नाकलय, तदीयशरीरवर्ण एव त्वच्छरीरे नास्ति, कथं तदीयसामर्थ्यमिति भावः; यद्वा—येन यशसा, खितत्वं तस्मात्, नाके स्वर्गे, स इवेन्द्र इव, स्वीकृतमात्मानमेव, ("यशो यः कथितः शिष्टैः"। "स इन्द्रः" इत्येकाक्षरकोषः) ["अव रवे गतौ कान्तौ पोतौ श्रमौ युतौ स्मृतौ। प्राप्तौ ग्रोपेऽर्थने वेश्मि भागे वृद्धौ वधे वधे॥ स्वाम्यर्थेऽवगमे कामे कृतौ" इति कवि-कल्पद्रुमः]। दूतीसंवादवाक्येष-व्याख्यादिग्दर्शिता मया। ग्रन्थबाहुल्यभीतेन नैतस्यां स्वधियाऽधिकम्॥ हे कान्त! कस्य सुखस्य, अन्तो यस्मात्, प्रस्तर इव क्रूरोऽसि पाषाण इव कठिनोऽसि, निष्ठुरहृदयोऽसि, तथापि न चाकर्षको यत्सम्बन्धात् प्रत्युतमपि लोहं निःसरति, अयस्कान्तमणिश्चुम्बको यत्सम्बन्धाल्लोहमुपगच्छति, सूर्यकान्तो वा सूर्यकरानिकरस्य छायासम्बन्धादिन्धनादावग्निमुत्पादयते, द्रावको यत्सम्बन्धाल्लोहं द्रवति, चन्द्रकरस्पर्शात् स्वयं द्रवति स चन्द्रकान्तो वा, भ्रामको यत्सम्बन्धाल्लोहं भ्रमति, स "गुरिया" इति ख्यातः, "चुम्बको द्रावकश्चैवाकर्षको भ्रामकस्तथा। एवं हि विचतुःपञ्च-वस्तुकाः सम्भवन्ति ते॥" इति शोडशास्त्रे; कामकलाकौशलेन यो नारीमाकर्षति स चाकर्षकः, रतिकौशलेन यश्चुम्बति स चुम्बकः, वीर्यस्यविशेषयोगेन कुचादिमर्दनेन वा यः कठिनकामिनीं द्रावयति स

नयति। धृतोरुकरवालसञ्चयोऽपि परमकाण्ड एव सम्यतन्
महापदं विग्रहेण लभते। राजसेन रहितो राजसे न रहितो

—सत्त्वेन गुणेन, सारचरितो यो रिपुमण्डलायतः शत्रुमण्डलायतः, निर्वृतिं जीविकाम्; यद्वा—रिपुमण्डलायतः सपत्नीसमुदायतः, [सप्तम्यर्थे तसिः] निर्गता वृत्तिरन्यपुरुषान्तरवरणेच्छा यस्याः, मत्सखी तामुपेत्य तिष्ठति, ["वर्त्तमान-सामीप्ये" इति लट्] पूर्वमन्याः सपत्नीरनादृत्य त्वं तस्यामेवानुरक्तः स्थितः, इदानीं तथैव कर्त्तव्यं त्वयेति बोति, ("कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः। "मण्डलं देशबद्धयोः" इति विश्वः। "निर्वृतिस्तु सुखे जीव्ये अभरं अस्तमयेऽपि च" इति धरणिः)। अपरा आह—स खलु वीरः शूरः, यः प्रतिपक्षस्य शत्रोः, सम्प्रहारतः कुञ्जरान् गजान्, नयति; यद्वा—वि विशेषेण, ईरयति, वीन् पक्षिणो वा, ईरयतीति वीरः, सम्प्रहारतो गमनात्, ("सम्प्रहारो रणे गतौ" इति हैमः) [ईर गतौ कम्पने च]; यद्वा—विशिष्टा इरा मद्यं यस्य मद्यप इति यावत्, ("इरा भूमिसुरावारि-भारतीषु प्रयुज्यते"। "कुञ्जरोऽनेकपे केशे धातक्यामपि कुञ्जरा" "वीरस्तु सुभटे श्रेष्ठे वीरो भल्लान्तरेऽपि च" इति विश्वप्रकाशस्त्रिषु) प्रतिगतः पक्षं प्रतिपक्षो बलं तस्य; यद्वा—प्रतिपक्षस्य सख्युः सहायस्य वा, ("पक्षो मासार्द्धके गेह-पार्श्वे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः॥ पतत्रे चुल्लीरन्ध्रे च देहाङ्गे राजकुञ्जरे॥" इति विश्वप्रकाशः) यद्वा—वि विशेषेण, ई कामम्, ईं लक्ष्मीं वा, राति आदत्ते वीरः, ("इकारः कथ्यते कामो लक्ष्मीरीकार उच्यते" इत्येकाक्षरकोषः) सम्यक् प्रकृष्टः, अत्युत्कृष्टः, हारो मुक्तादिमाला तान् सम्प्रहारतः, [द्वितीयार्थे तसिः] कुञ्जरान् केशान्, नयति, ("हारो मुक्तावली युद्धे" इति विश्व-प्रकाशः) यद्वा—सम्प्रहारतोऽत्युत्कृष्टरतियुद्धे, [सप्तम्यर्थे तसिः] ("खलु स्यात् प्रतिषेधेऽपि निश्चयेऽप्यवधारणे" इति विश्वः)। अन्या आह—धृत उरुकरेण विशालहस्तेन, वालानां शत्रुकेशानां, सञ्चयो येन; यद्वा—धृत उरुमंहान्, करवालस्य कृपाणस्य, सञ्चयो येन; यद्वा—ऊरुपर्यन्तौ करावूरुकरौ, ताभ्यां धृतो वालानां प्रतिपक्षस्त्रीकेशानां, सञ्चयो येन, आ-जानुबाहुरित्यर्थः; यद्वा—धृत उरुकरेण भूरिरोमभागेन, वालानामश्वानां, सञ्चयो येन; यद्वा—धृत उरुकरेणोरु-कराभ्यां वा वालानां सञ्चयो येन; यद्वा—धृत उरुकरवालानां सञ्चयः, सुरतबन्धे, विग्रहेण शरीरेण कलहेन युद्धेन पक्षिपदेन वा, महापदं महास्थानं महापत्तिं वा, पदं शस्त्रं, परमार्थं वा, अकाण्डेऽनवसरे, परमकाण्डे उत्कृष्टावसरे वा, ("विग्रहो

भुवम्। विशारदा विशारदाभविशदा विशदात्मनीनमहिमा महिमानरक्षणक्षमा क्षमातिलक! धीरताधीरता मनसि भूतता-भूतता वचसि। साह,सेन! साहसिन कमला कमलापराजिता-

बुधि विस्तारे प्रविभागशरीरयोः" इति हेमः)। अपरा आह—राक्षसे रक्षोगुण-विकारे सति, अनरहितो मनुष्यानकुलः, त्वं न राक्षसे, रहितो मनुष्या जनेषु क्षमः; [ रह त्यागे क्तः ] यदा—राक्षसेन [ प्रज्ञाद्यणि ] रक्षोगुणेन, रहितो नरहितो मनुष्यहितः, न राक्षसे भुवम्; यदा—राक्षसः रक्षोगुणप्रधानः, इनरहितोऽप्रभुत्वं, न राक्षसे, यतो रहितः प्रभुत्वा त्यक्तः, नरेषु हितो राक्षसे भुवम्। ("भुवं तु निश्चिते तर्के निश्चले शाश्वतेऽव्ययत्" इति विश्वप्रकाशः)। यमकालङ्कारः। अपर आह—विमला शारदा सरस्वती यस्य तत्सम्बोधनं, धृष्टो वा चतुरो वा, ("विशारदो बुधे धृष्टे" इति विश्वप्रकाशः) स्त्रीविशेषणं वा, वि विशिष्टः, शारदोऽभ्रो मेघः, तद्वद्विशदा निर्मलान्तःकरणा, विशन् प्रविष्टो भवन्, आत्मनीन आत्महितः, महिमा महित्वं यस्याः, मह उत्सवो येषां ते महिनः, तेषां मानरक्षणे सम्मानपालने, क्षमा, क्षमातिलक! पृथ्वीभूषण! शान्तितिलक! वाहिः शान्तिप्रदर्शक! तव मनसि धीरता बुद्धिरता, सार्वकालिकोऽर्थः, अधीरता कातरता, वचस्यभूतताऽसत्यता, भुवि पृथिव्याम् तता विस्तृता; यदा—ककारो वासुदेवः, तस्माद्भूतलता अन्वर्थता; यदा—अक्षेण व्यवहारेण, मा लक्ष्मीः, सा तिलकमस्य; यदा—अक्षस्य विभीतकस्य, मा लक्ष्मीः, तत्तिलक! ("अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः। आत्मनि पाशके चाक्षम्" इति विश्वप्रकाशः) विशेषेण शारं हिंसां, ददातीति विशारदः, [ शॄ हिंसायां घञ् ] महिमा अनन्ति प्राप्नुवन्ति ते महिमाना मानधनाः, तेषां रक्षणक्षम! हे धीर! ताक्षाद्दृश्यः, धीरतास्तव मनसि तव वचसि भूतता सत्यता, भूतता पृथ्वीप्रख्याता, ("भूतं न्याये पिशाचादौ भूतं सत्योपमानयोः" इति विश्वः) विशारदाभविशदा विशिष्टशरन्मेघस्वच्छा, निष्कपटहृदयेति यावत्, आत्मनि स्वविषये, विशिष्टं शं श्रेयः, यति विशदाः, [ दो अवखण्डने ] इनस्य सूर्यस्य, महिमा महत्त्वं यस्य तादृशस्त्वम्। ("शं श्रेयसि प्रकारः स्याच्छिवे सौख्ये प्रकीर्तितः" इत्येकाक्षरकोषः। "शं शर्म शास्त्रं शास्तरि" इति विश्वप्रकाशः) [ "आत्मन्विश्वजनभोगोत्तरपदात् खः" इति खः ] आत्मनीने। अपरा आह—सा मत्सखी, त्वामाह, हे सेन! अप्रभो! परतन्त्र! सा मनसाऽपि नान्यमनुवरामीति प्रतिज्ञाविशिष्टाऽहम्, आहसेन मदीये-प्रकाशेन, कस्य सुखस्य, मला आधारपात्री, [ मल मल्ल धारणे पचाद्यच् ] पराजिता

कन्दर्पकं दर्पकं न तनोषि विशेषतोऽशेषत: खिन्नमेव मरणम् ।
शठधियां शोधन ! यशोधन ! प्रेमहार्य्यमहार्य्यांशयोत्कटाक्षै:
कटाक्षैराविर्भूतदास्यास्तदास्या: परिजना: ! ।    कमलाकृति-
नारीणां कमलाकृतिनारीणां भवता मुखं न मलिनितम् ? ।

---

सम्बुद्धिरुक्तो यथा रामविरहातिशयपोषकत्वात् सर्वथा प्रवीणत्वद्योतनाय नपुंसक-प्रयोग: ] अमा: प्राणिन:, तेभ्यो हिताऽन्या, [ "तस्मै हितम्" इति यत् ] सतामावहा, त्वयेति शेष:, अस्ता तिरस्कृता, इदानीं दासतां भज, कोऽहमो ? पुरो नगर्य्या:, सेव लक्ष्मीव, [ ष्वक्तेर्विच् ] हे महाम्भ्केटक ! अत्रापि पूर्ववत्, ( " म: शिवश्चन्द्रमा वेधा:" । "डकारस्फेटने मत:" इत्युभयत्रैवाभरकोष: ) अन्या इतरा:, तावदासती तिष्ठन्तु, अहमेव पुरो दास्यं भजामि । अपरा आह, अशका शेषेणैव, मारतो बलात्, सा, तन्वी तव प्रियेति शेष:, त्वं रत: मग्न:, किमपि दर्पकं न तनोषि, किमुत्कृष्टं, दर्पकं दर्पं, न तनोषि, विशेषतो विशेषात्, अशेषतो नि:शेषात्, मरणं खिन्नमेव, माधुर्य्ये गुण:, "मूर्द्ध्नि वर्गान्त्यगा: स्पर्शा अटवर्गा रणौ लघू । अवृत्तिर्मध्यवृत्तिर्वा तन्माधुर्य्यमिति स्मृतम् ॥" इति काव्यप्रकाशे । परा प्राह, हे शठधियां जडबुद्धीनां, शोधन ! यशसा धन ! बुद्धिप्रद्धिप्रवीण ! उत्कटमशोभनम्, अक्षि येषु तै:, कटाक्षै: प्रेमहार्य्य ! सुखहारणीय ! या त्वां क्रूरकटाक्षैरामन्त्रयति तस्यास्त्वं वश्य इत्यर्थ:, अत एवामहार्य्यांशय ! महानीचाशय ! अस्तं त्यक्तं, दास्यं यया तादृशी, आविर्भूतं दास्यं यस्मिन् तत्सम्बोधनं, परितो जनान् स्वप्रियजनान्, अस्यति, तया कामंवादिना हतप्रज्ञतया, तत्सम्बोधनम् ; आवर्जने—शठधियां जडबुद्धीनां, शोधन ! शिक्षक ! अतो यशोधन ! प्रेमहार्य्य ! केवलप्रणयवश्य ! अतो महार्य्याशय ! अनुन्नताभिप्राय ! तदा मत्सख्या मानसमये, उत्कटाक्षै: कटाक्षैर्मन्मथाभिमि:, अस्या अस्मत्सख्या:, परिजना अस्मदादय:, आविर्भूतदास्या: यस्मिन् काले तया मान: कृतो भवता च क्रूरकटाक्षै: सा दृष्टा, तदारभ्यैवास्मदादयस्तत्परिजना भवत्सेवका: संवृत्ता:, एवं च चिरसेवकानामस्मदादीनां प्रार्थनया सा सुसम्पन्नमनोरथा सम्पादयितव्येत्यर्थ: ; यद्वा—उत्कटव्यवहारै: ; यद्वा—उत्कटभाभिर्वोत्कटाक्षै: ; यद्वा—तदा भवत्कोप-काले, उत्कटाक्षै: क्रूरै: कटाक्षैरित्यादि पूर्ववत्, अत्र पक्षे सर्वथा तवैव दोष इत्यर्थ: । काचिदाह, भवता अरीणां शत्रूणां, कमलाकृतिनारीणां लक्ष्म्याकृतिस्त्रीणां, कमलाकृति मुखं न मलिनितमिति न ; यद्वा—कृतिना भवता अरीणां शत्रूणां, कमला लक्ष्मी:, न मलिनिता न मलिनीकृता, कमलाकृति पद्माकारं, नारीणामर्था

विश्वस्य विश्वस्य व्यवस्था समासाद्यममामाद्यमनेककाल-सङ्गीतमङ्गी तनुषे तनुषेकमनङ्गमनङ्गपुष्पेषुपुष्पेषु रुजा तरसा जातरसा मन्दाचमन्दा क्षणं भ्रमन्ती मुह्यति। कामधुराधरेण का मधुराधरेण मुक्ता रजोराजिविशेषकेण विशेषकेण मुखेन्दुना। तव हृदि लग्ना स्तदिमाकरेण करेण स्वेदबिन्दु-

---

कमलनारीणां, मुखं न मलिनितम्? इति काकुः, ["नपुंसकमनपुंसकेन" इति नपुंसकैकशेषः] ("कली कुशल इत्यपि" इत्यमरः) यद्वा—कमलया लक्ष्म्या, कली तेन सहिता परीणां नारीणां कमलाकृति मुखं न मलिनितम्? काकुः पूर्ववत्; यद्वा—कमलाकृतिम्! पद्माकार! निर्लेपत्वेन साम्य, लक्ष्मीकृष्णेति वा सम्बोधनम्; नारीणामा साकल्येनातिकठिनतया वैदग्ध्येन वा कोऽपि नाशयान् द्रावयितुं पटुरिति प्रसुतापन्नानां, नारीणां कमलाकृति कमलरूपं मुखं न मलिनितम्? इति काकुः; अकाकुरुपालम्भपक्षः। काचिदाह, विश्वस्य सर्वस्य, विश्वस्य विश्वासं कृत्वा, सा तव प्रिया, समा सलज्जीका, विगता अवस्था मर्यादा यस्याः सा यस्याः, आदितोऽसमा विषमा, त्वं तु साद्यमासाद्यर्थोग्य, तनुषे शरीराय, ("तनुः स्यात् तनुषा सार्द्धम्" इति शब्दभेदप्रकाशः) कमलस्नेहार्जने तनुषे आसेवकं विश्वस्य सर्वस्य,जगतो मध्ये त्वया व्यवस्था समासादि असमं विषममस्थेयसमासां इ असमान इति वा, आद्यं प्रथमम्, अनङ्गः कामस्य, सेकं कं सुखं, ("पुष्पं विकाशे कुसुमे स्त्रीधातु रजसि स्मृतम्" इति विश्वः) अनङ्गमशरीरं, पुष्पेषुपुष्पेषु कामशरेषु, तरसा वेगेन, जातरसा मन्दं च मन्दं च, भ्रमन्ती मुह्यति; आवर्जने—हेऽनङ्ग! आद्यात् काम! अनङ्गमसम्बद्धं, प्रति पुष्पपुष्पेषुरुजा कामबाणरुजा, तरसा वेगेन, जातरसोत्पन्नानुरागा, मन्दाचमन्दा लज्जामन्थरा, क्षणं भ्रमन्ती मुह्यति। धुराया धरो धुराधरः, [भागुरिमते टाप्] कामं धुराधरत्वेनात्यन्तभारवाहकेन, अधरेण नीचेन, रजोराजिभिर्विशेषकं तिलकं यस्य तेन त्वया, विशिषस्य दाधाटैः शोभा यत्र तेन मुखेन्दुनोपलक्षिता मधुरा रम्या मूर्तिः, का स्त्री, मुक्ता? न काऽपीत्यर्थः, एतादृशेनैतादृश्यो बह्व्य उपभुक्ताः। समालङ्कारः, "समं स्यादर्णनं यत्र द्वयोरप्यनुरूपयोः" इति लक्षणात्; आवर्जने—कामस्य धूः कामधुरा, ["ऋक्पूः" इति समासान्तः] तथा अधरत्वेन मधुरः सुधाधिकस्वादः, अधरोष्ठो यस्य तेन, मुक्तारजोराजिभिर्विशेषकं तिलकं यस्य तेन, एतन्निर्माणावसरे बहवो

अनन्तरं दुग्धार्णवप्रविष्टमिव, स्फटिकगृहप्रविष्टमिव, श्वेतद्वीपनिवाससुखमनुभवदिव जगदामुमुदे। क्रमेण च विघटमानदलपुट-कुमुदकाननकोष-मकरन्द-बिन्दु-सन्दोहमुदित-मुग्ध-मधुकर-कुलकलरुतमुखरितदिगन्ते, चन्द्रिकापानभरालसचकोरकामिनीभिरभिनन्दितागमने, सुरतभरपरिश्रमखिन्नपुलिन्दराजसुन्दरीस्वेदजलकणिकाऽपहारिणि प्रयाति सायन्तने कनीयसि निशानिःश्वासनिभे नभस्वति कन्दर्पकेतुस्तमालिकामकरन्दसहायो वासवदत्ताजनकनगरमयासीत्।

अथ कटकैकदेशविरचिताभ्रंलिहशिखरेण, सुधाधवलेन,

---

स्तबकभरानुकारित्वादस्येत्यर्थः, स्तनकुम्भेनोपलक्षिता, अनेन मनस्विनी युवतिः सुन्दरी अथवा प्रसाधिता चेति, सुगन्धि जाम्बूनदम्। ("दरा गर्त्तेऽपि निगद्यते" इत्येकाक्षरकोषः)। निरीक्ष्य लोकव्यवहारजातं रीतिं कवीनामथ कोषजालम्। व्याख्या मयेयं रचिता महेशपादारविन्दे प्रणिधाय चेतः॥

चन्द्रिकाव्याप्तिं वर्णयन्ति।—अनन्तरं चन्द्रोदयोत्तरं, दुग्धार्णवप्रविष्टमिव स्फटिकगृहेषु प्रविष्टमिव श्वेतद्वीपनिवासस्य सुखमनुभवदिव जगद्भुवनम्, आ साकल्येन, मुमुदे। [मुद हर्षे] क्रमेण कन्दर्पकेतुर्वासवदत्ताजनकनगरमयासीदित्यन्वयः। विघटमानं विकसत्, दलपुटं पत्रपुटं यस्य तादृक्, कुमुदकाननं तस्य कोषेषु मध्यभागेषु, मकरन्दबिन्दुसन्दोहः पुष्परसबिन्दुसमुदायः, तेन मुदितं हृष्टं, मधुकरकुलं तस्य कलरुतेन मुखरितदिगन्ते, चन्द्रिका ज्योत्स्ना, तस्याः पानभरेणालसचकोरकामिनीभिरभिनन्दितागमने स्तुतागमने, ("चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः) सुरतभरपरिश्रमखिन्नाः पुलिन्दराजस्य म्लेच्छजातिविशेषराजस्य, सुन्दर्यः ताभिः स्वेदकणिकाऽपहारिणि सायन्तने सन्ध्याकालिके, ["सायंचिरम्" इत्यादिना ट्युः] कनीयसि स्वल्पे, अत एव निशानिःश्वासनिभे नभस्वति वायौ, प्रयाति सति तमालिकामकरन्दो सहायो यस्य सः, [या प्रापणे, "यमरम" इति सकिटौ]।

अथ वासवदत्ताभवनं ददर्शेत्यन्वयः। कटकैकदेशे राजधान्येकदेशे, विरचितमभ्रंलिहं शिखरं यस्य तेन। ["वहाभ्रे लिहः" इति खश्] ("कटकं वलये

एकान्तर-निविष्ट-कनक-मुक्ता-मरकत-पद्मराग-शकलेन, वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव शालवलयेन परिगतम्; अनिलोल्लासिताभिः, नभस्तलमञ्जरीभिरिव, तर्जयन्तीभिरिव गगनार्णवश्रियं, पताकाभिरुपशोभमानम्; कनकशिलापट्टाङ्गण-प्रसृताभिः, कर्पूरकुङ्कुम-चन्दनैलालवङ्गगन्धोदक-परिमल-वाहिनीभिर्वाहिनीभिः, अम्लानतटस्फाटिकपट्टसुखनिषण्ण-निद्रायमाणप्रासादपारावताभिः, प्रभ्रश्यत्तटनिकटविटपिकुसुम-स्तवकितसलिलाभिः, अनवरतमज्जदुन्मज्जदुन्मदयुवतिजन-घनजघनस्फालनोच्छलच्छीकरनिकरस्नपितवेदिकाभिः, कर्पूर-पूरविरचित-पुलिनतट-निविष्ट-निनदानुमीयमान राजहंसीभिः,

---

स्थानी राजधानीनितम्बयोः" इति विश्वः)। सुधा चूर्णाख्यलेपविशेषः, तया धवलेन। एकान्तरं निविष्टानि कनकं सुवर्णं, मुक्ता मरकतं गारुत्मतं, पद्मराग एषां शकलानि यत्र। वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव शालवलयेन प्राकारवलयेन, परिगतम्। ("प्राकारो वरणः शालः" इत्यमरः)। अनिलोल्लासिताभिर्नभस्तलमञ्जरीभिर्गगनार्णवश्रियं तर्जयन्तीभिरिव पताकाभिरुपशोभितम्। ("पताका वैजयन्ती स्यात्" इत्यमरः)। कनकशिलापट्टाङ्गणेषु प्रसृताभिः, कलयन्त्रविशेषैरिति भावः, "फोवारा" इति "नहर" इति वा भाषायां, "पाटङ्गण" इति "परसार" इति भाषायां प्रसिद्धः। कर्पूरकुङ्कुमचन्दनैलालवङ्गानां गन्धो यत्र तादृशुदकं तत्परिमलवाहिनीभिर्वाहिनीभिर्नदीभिः। अम्लानतटस्फाटिकपट्टेषु सुखेन निषण्णा अत एव निद्रायमाणाः प्रासादपारावता यासु, निषण्णत्वमत्र निषण्णत्वे च निद्रायां सुखोपवेशनं हेतुरिति कारणमालालङ्कारः। प्रभ्रश्यद्भिस्तटविटपिकुसुमैः स्तोकप्रपुष्पैः, स्तवकितं सञ्जातस्तवकं, सलिलं यासाम्। अनवरतमज्जदुन्मज्जदुन्मद-युवतिजनस्य घनजघनास्फालनेनोच्छलच्छीकरनिकरेण स्नापिता आर्द्रीकृता, वेदिका वितर्दिः, प्राङ्गणादौ कृतमुपवेशनस्थानं याभिर्वा ताभिः। ("स्याद्वितर्दिस्तु वेदिका" इत्यमरः)। कर्पूरपूरेण विरचितं यत् पुलिनं तस्य तटे समीपदेशे, निविष्टा उपविष्टा, निनदैर्वाशितैः, अनुमीयमाना राजहंस्यो यासु ताभिः; भ्रान्तोऽत्र पुलिनपयोः। भ्रान्तिमदलङ्कारेष्वनुमानालङ्कारः, कर्पूरपुलिनवर्णनेन सम्पत्परि-

विकचनीलोत्पलकानन-दर्शिताकाण्ड-चक्रवाक-तिमिरशङ्काभिः, युवतिभिरिव सुपयोधराभिः, सुग्रीवयुद्धकलाभिरिव कीलाल-क्षपितकुम्भकर्णाभिः, सागरकूलभूमिभिरिव सुन्दरीपादपराग-शबलाभिः, नवनृपतिचित्तवृत्तिभिरिव कुल्यापमानकारिणीभिः, अनेकतराभिरुपशोभितम् ; शिखरगतमुक्ताजालव्याजेन पुर-युवतिजनदर्शनकुतूहलागतं तारागणमिवोद्वहद्भिः, उपान्त-निलीनाभिः काचकलशाकृतिमुद्वहन्तीभिः शिखिसंहतिभि-रुद्भासितैः प्रासादैरुपशोभितम् ; क्वचिदनवरतदह्यमानकृष्णा-

---

नीलत्ववर्णनात् उदात्तालङ्कारोऽप्ययं, तथाच दण्डी—"आशयस्य विभूतेर्वा यन्महत्त्व-मनुत्तमम्। उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः॥" इति। विकचेत्यादि।—रक्तोत्पलपाठपक्षे—रात्रौ विकासासम्भवात्, नीलोत्पलपाठपक्षे—चक्रवाकाणामेव तिमिरशङ्कावर्णनानुपयोगादुपेक्ष्यम्। युवतिभिरिव तरुणीभिरिव। ["यूनस्तिः" इति तिः] सुपयोधराभिः शोभनस्तनीभिः ; पक्षे—धरतीति धरा, [पचाद्यच्] पयसो जलस्य, धराभिः। ("तरुणी युवतिः समे"। "स्त्रीस्तनाब्दौ पयोधरौ" इति द्वयोरप्यमरः)। सुग्रीवयुद्धकलाभिरिव कीलालेन रक्तेन, क्षपितः कुम्भकर्णो राक्षसो याभिः ; पक्षे—कीलालेन पयसा, क्षपितः कुम्भस्य कलशस्य, कर्णोऽंशो याभिः ; ("शोणितेऽम्भसि कीलालम्" इति पक्षद्वयेऽप्यमरः)। सागरस्य कूलभूमिभिरिव तीरभूमिभिरिव, सुन्दरोपादपानां रागैः शबलाभिः ; पक्षे—सुन्दरीणां पादपरागै-श्चरणरेणुभिः, शबलाभिः। ("सुन्दरी तरुभिन्नार्योः स्त्री हरिचरेऽन्यवत्")। नवोऽचिरप्राप्तराज्यपदः, नृपतिस्तच्चित्तवृत्तिभिरिव कुल्यस्य कुले साधोः, ["तत्र साधुः" इति यत्] अपमानकारिणीभिः, पित्रादेरमात्यादयः शिष्यत्वासभ्यत्वाद्वा नैनमतिमनुते इति तेषामपमानः ; पक्षे—कुल्यानां कृत्रिमाल्पसरिताम्, अपमानकारिणीभिः। ("कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः)। अनेकतराभिर्बह्वीभिः, उपशोभितम्। शिखरगतानां पक्षिप्रवेशवारणार्थमुपरिबद्धानां, मुक्ताजालानां मुक्तामयानायानां, व्याजेन पुरयुवतिजनस्य दर्शनार्थं कुतूहलं कौतुकं, तस्मादागतं तारागणमिवोद्वहद्भिः। ("कुतुकं च कुतूहलम्"। "जालं समूह आनायो गवाक्षक्षारकावपि" इत्युभय-त्राप्यमरः)। उपान्ते निलीनाभिर्नितरां लीनाभिः, निश्चलतया स्थिताभिः, अत एव काचकलशाकृतिमुद्वहन्तीभिः शिखिसंहतिभिर्मयूरयूथैः, उद्भासितैः प्रासादै-

गुरुधूमपटलैर्दर्शिताकालजलदोदयम्; क्वचिदतिगम्भीरमुरज-रवाहूतमानन्दनर्त्तितनीलकण्ठम्; सायन्तनसमयमिव पतित-लोकलोचनम्; जनस्थानमिव दारोत्सुकरामम्; मानुषक-मिवाभिनन्दितसुरतम्; निधानमिव कौतुकस्य; वासमिव शृङ्गारस्य; कुलगृहमिव विभ्रमस्य, सङ्केतस्थानमिव सौन्दर्य्यस्य; वासवदत्ताभवनं भवनन्दनप्रभावो ददर्श।

द्रवसि द्रवसिद्धितो निगलिते!। चपला चपलायते

---

रूपशोभितम्। क्वचिदनवरतदह्यमानकालागुरुधूमपटलैर्दर्शितमकाले जलदानां मेघानाम्, उदयो येन यत्र वा। अत एव क्वचिदतिगम्भीरमुरजरवाहूताः सानन्दं नर्त्तिता नीलकण्ठा बर्हिणो यत्र, राज्ञो मयूरनृत्यदर्शनं तिर्य्यञ्चोऽपि सर्वकालं सुखिनः, मनुष्याणां तु का कथा ? इति ध्वनयितुम्। ("मृदङ्गा मुरजाः"। "मयूरो बर्हिणो बर्ही नीलकण्ठः" इति द्वयोरप्यमरः)। सायन्तनसमयमिव पतितः लोकलोचनः सूर्य्यो यत्र; ("किरणमालिविलोचनहेतयः" इति हारावली) पक्षे—पतितानि सौन्दर्य्यावलोकनार्थे लोकानां लोचनानि यत्र। जनस्थानमिव दारेषु सीतायाम्, उत्सुको रामो राघवो यत्र; पक्षे—दारयतीति दारः कन्दर्पः, तेनोत्सुका रामाः स्त्रियो यत्र। ("सुन्दरी रमणी रामा" इत्यमरः)। मानुषकमिव मनुष्यसमूह इव, अभिनन्दिता श्लाघाविषयीकृता, सुरता देवत्वं येन; पक्षे—अभिनन्दितं सुरतं मैथुनं यत्र। कौतुकस्य निधानगृहं भाण्डागारमिव। शृङ्गारस्य वासगृहमिव, "पुंसः स्त्रियां स्त्रियाः पुंसि सम्भोगं प्रति या स्पृहा। स शृङ्गार इति ख्यातः क्रीड़ादि-रमकारणम्॥" इत्युक्तमन्यत्र। विभ्रमस्य विलासस्य, कुलगृहमुत्पत्तिस्थानं, "कामोन्मुक्ततया कार्य्यं रूपयौवनसम्पदा। अनवस्थितचेष्टत्वं विभ्रमः परिकीर्त्तितः॥" इति भरतः। भवनन्दनस्य कार्त्तिकेयस्येव, प्रभावो यस्य सः।

इत्यन्योऽन्यं पृच्छन्ति पेशला रम्याः, प्रमदानामालापकथाः शृण्वन् कन्दर्पकेतु-संकल्पेन समं विस्मयमाश्चर्य्यम्, अचरीत्। द्रवसिद्धितो मर्मसिद्धितः, [सार्वविभक्तिकस्तसिः] निगलिते! उभयोरैक्यान्निगलिते! द्रवसि [द्रु गतौ] अद्रस्य गमन-प्रयास उपशमनाय अफलत्वादिति काचिदुपहसति; यद्वा—मया प्रेम्णा बद्धाऽपि त्वं मां परित्यज्य कान्तेऽनुधावसि; ("द्रवो विद्रवनर्मणोः। पातके परमन्तोऽपि" इति

किमेषा ?। स्तबकस्तव कर्णतः पतितोऽयं सुरेखे !। सुरया
र्चिता सुरयाचितश्रीस्त्वमसि मत्ता। कलहे! कलहेम-
काञ्चीदामक्कणितैः स्मरमिवाह्वयसि। मलये! मलयेप्सितं हृश्ये-
वाधिगतासि। कलिके! कलिकेतुमिमां मुखरां मुञ्च मेखलां,
शृणुमः कलवल्लकीरुतम्। मेखला मे खला न भवति,त्वमेव मुखर-
तया सुखरतया च। व्रपतेऽत्र पतेदियमवन्तिसेना कुसुमोपहारे

हिमः) यद्वा—निगलिते! एतदभिधाने! द्रवसिद्धितो द्रावकौषधिविशेषात्, द्रवसि।
"यद्यप्यष्टगुणः स्मरो निगदितः पुंसोऽङ्गनानां सदा नो याति द्रवतां तथाऽपि झटिति
व्यायासिता सङ्गमे। तत् स्याद्विजनसम्प्रयोगविधिना सङ्केपतो द्रावणम्॥" इति
रान्तिदेवः। यथोक्तं द्रवतीति तां लक्ष्यीकृत्यान्या प्रत्याह, एषा पुरोवर्तिनी, चपला
चपलाभिधाना, किं चपलेव विद्युदिव, आचरति ? नाम्नैव गतार्थत्वादिति भावः;
यद्वा—एषा चपला चञ्चला, किञ्चान्यच्च, पलायते; [ इण् गतौ"उपसर्गस्यायतौ"इति
लत्वं पदारेफस्य ] यद्वा—चपलेव पिप्पलीव, आचरति, इयमेवौषधिः सर्वदा द्रवतीति
भावः। ("चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च" इति विश्वप्रकाश इति दिक्)।
हे सुरेखे! तव कर्णतः स्तबकः पुष्पगुच्छः, अयं पतितः, त्वं न जानासि? मत्ता-
ऽसि ? इत्युपहासः। ("स्याद्गुच्छकस्तु स्तबकः"इत्यमरः)। एतामेवोपहसति, सुरैर्देवैः,
याचिता अर्थात् ब्रह्मणा अर्चिता योग्या, श्रीः सौन्दर्यश्रीर्यस्यास्तादृशी त्वं, सुरया
मदिरया, चिता व्याप्ता तादृशी सती, मत्ताऽसि। हे कलहे! कलहेमकाञ्चीदाम-
क्वणितैः स्मरमाह्वयसीवाकारयसीव, पर्यातिरिक्तपुरुषाह्वानोन्मेषमुपहासाय। एता-
मुपहसति, मलये! तन्नामिके! मे शिवे, लयो नाशो यस्य मलयः कामः, तदुदीप्सितं
हृद्य, हृश्येव हृद्येव, अधिगताऽसि, त्वं पुरुषं कटाक्षैरामन्त्रयसीति भावः; ("अभीष्टे-
ऽभीप्सितं हृद्यम्" इत्यमरः) यद्वा—मः शिवः, लयो गृहं यस्य मलयश्चन्द्रः, तस्येप्सितं
कारणः तं, हृश्येवाधिगताऽसि मृगलोचनाऽसीति भावः, ("मः शिवश्चन्द्रमा वेधाः"
इत्यनेकार्थध्वनिमञ्जरी)। कलिके! कलेः रतिकलहस्य, केतुं ध्वजं, यथा केतुना
संग्रामादि द्योत्यते, एवमनया रतिकलहो द्योत्यते इति भावः, मुखरां वाचालां,
मेखलां काञ्चीं, मुञ्च, त्यागे फलमाह, कलमव्यक्तमधुरं च, तद्वल्लकीरुतं तत् शृणुमः।
("कलिः स्यात् कलहे शूरे कलिरन्त्ययुगे युधि" इति विश्वप्रकाशः)। उत्तरयति,
मे मम, मेखला काञ्ची, खला पिशुना, न भवति, सुखेन प्रेम्णा, रतं यातीति मुख-
रतया; यद्वा—सुखेन वात्स्यायनाद्युक्तोपायेन, रतं यातीति सुखरतया; त्वमेव, सुखर-

मुग्धा। तव कैतवैरलं, चर्चिके! वेपथुरेवाशयं व्यनक्ति। वहतीव हतीरनङ्गलेखे! स्मरसायकानां तव वपुरक्षतम्। विहिता-ऽपि हिताय ते उत्कलिकामहोर्मिः। वदने वद नेत्रपेयकान्तौ किमुपमानमिन्दुरप्युपयाति। वसतीव सतीव्रते! तव हृदि कोऽपि शतधा शतधारसारा वाचस्तवानुभूताः। कुन्तलिके! करकाकरकालमेघखण्डतुलामयमुल्लसितोत्फुल्लमल्लिकामालभारी कुन्तलकलापः तव याति। केरलिके! पुरगोपुरगोचराः

---

तया वाचालतया, खला। ("मुखस्तूपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः" इति हैमः। "पिशुनो दुर्जनः खलः" इत्यमरः)। काचिदाह, मुग्धेयमवन्तिसेना त्रपते लज्जते, अत्र कुसुमोपहारे पतेत्। [सम्भावनायां लिङ्]। तां प्रत्याह, चर्चिके! कैतवैरलं कैतववाक्यं नालमित्यर्थः, वेपथुरेव कम्प एव, तवाशयं व्यनक्ति सात्त्विकाविर्भावात् त्वमेव कम्पसे मां किं तथा वदसि? इति भावः; "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः॥" अनङ्गलेखे! तव वपुः [कर्तृ] स्मरसायकानां हतीर्हननानि, [हन् हिंसागत्योः क्तिन्] वहतीव अतो-ऽक्षतम्। उत्तरमाह, तेऽप्युत्कलिकामहोर्मिः विहिता कृता, हिताय विरह-ज्ञानाविष्काराद्बोधात् ते हिताय कल्याणाय; यद्वा—उत्कलिकामहोर्मिः विहिता-ऽपि हितवदाचरति हितायते; यद्वा—उत्कलिकामहोर्मिः विहिताऽपि हि निश्चयेन, तायते लोकोपहासात् त्वां पालयतीत्यर्थः, [ताय्ृ सन्तानपालनयोः] सन्तानः प्रबन्धः; यद्वा—विहिताऽप्युत्कलिकामहोर्मिः [कर्मकर्तृ] तायते स्वयमेव विस्तृता भवति, हि प्रसिद्धौ; [तनु विस्तारे, तनोतेर्यकीति विभाषात्वम्] यद्वा—उत्कलिकामहोर्मिः विहिताऽपि हिता हृष्टा, [हि गतौ वृद्धौ च] अयते लोके गच्छति, प्रसृता भवति। हे नेत्रैः पेया कान्तिरस्य तस्मिन् वदने मुखे, किमिन्दुरुपमानमपि यातीति वद; पूर्वं त्वन्मुखमुपमानमिदानीमिन्दुरुपमानमपि यातीति सम्भावनं, मुखे विरहातिशयात् पाण्डुत्वाधिक्यद्योतनाय। उत्तरमाह, सतीनां व्रतमिव व्रतमस्यास्तत्सम्बोधनं, तव हृदये कोऽपि वसतीव, शतधा शतप्रकारेण, शतधारोऽशनिः, तत्साराः वज्रपरुषाः, तव वाचोऽनुभूताः। ("शत-कोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः" इत्यमरः)। कुन्तलिके! उल्लसितोत्-फुल्लमल्लिकामालभारी तवायं कुन्तलकलापः करकाभ्रो वर्षोपलानाम्, आकरो

श्रूयन्ते गीतध्वनयः, किमिव कल्पयसि ?। क्षणमीक्षणमीलनादपि चटुलं चटुलम्पटं सखीजनमायासयसि मृगाक्षि!। स्तनता स्तनताडनेषु यत् सौख्यं तल्लब्धं स्मरता स्मरतापनोदनं दयितेन दयितेन विमुक्ताऽसि किं मुह्यसि ? महतो महतो हतमोहतमो दयितो दयितः स्मरति स्म रतिप्रियं तव कौशलम्। नवनिशानखराणां नखराणां व्रणः स्मरजन्यां स्म रजन्यां कुरुते! न कुरुते रुजं किं ते ?। लोचनाभ्यां

यः कालमेघखण्डः तस्य तुलां साम्यं, याति प्राप्नोति। ("वर्षोपलस्तु करका" इत्यमरः) [मालभारीत्यत्र "इष्टकेषीकामालानाम्" इति ह्रस्वः]। पुरस्य गोपुरं द्वारं, तद्गोचरा गीतध्वनयः श्रूयन्ते। ("गोपुरं द्वारि पुरस्य कैवर्तीमुस्तकेऽपि च" इति मेदिनी) किमिव कल्पयसि ? किं वा साधयसि ? कथं वा कथ्य कृते वसि किं कल्पयसि ? सर्वैः स्पष्टतयैव ज्ञायते इति त्वदर्थमेवेत्युपहासः। हे मृगाक्षि! क्षणं ["कालाध्वनोरत्यन्तसंयोगे" द्वितीया] ईक्षणमीलनात् दृष्टिमीलनात्, चटुलं चञ्चलं, कार्य्येऽनलसं, चटुलम्पटमपि प्रियवाक्यासक्तमपि, सखीजनमायासयसि त्वमपि विरहवेदनया मूर्च्छिताऽस्मान् वेदयसीति भावः। दयितेनाभीष्टेन, स्तनता भणितं कुर्वता, सङ्केतार्थं पत्न्यादिशब्दं कुर्वता वा, स्तनमण्डलेषु सुरते चन्द्रकलानुरोधघातेषु, यत् स्मरतापनोदनं स्मरतापनाशकं, सौख्यं लब्धं तत् स्मरताऽपि दयितेन पत्या, विमुक्ताऽसि। ("दयितः स्वामिकान्तयोः" इति धरणिः) पत्याऽप्येनाहमेव मुक्ताऽस्मीति को वेद तवापराधमिति ध्वनिः, यत एव वदति, किं मुह्यसि ? युक्तमेव कृतं पत्येत्यभिप्रायः; यद्वा—समाश्वासयति, किं मुह्यसि ? स त्वद्गुणासक्तस्त्वां न त्यक्ष्यति। पूर्वं वर्णितमपि गुणं तत्प्रत्ययार्थं पुनर्वर्णयति, महतो महोत्सवः महतस्तटतिरूपात महोत्सवात, हतमोहतमः हतो यथा कयाचिदनविधानरूपो मोहो यस्य सः, ततोऽतिशये तमप्, दयितः कान्तः, दयितः पतिः, रतौ सुरते, प्रियं तव कौशलं स्मरति स्म स्मृतवान्। ["लट् स्मे" इति भूते लट्]। हे कुरुते! नवं निशानं तेजनं, तेन खराणां नखराणां नखानां, व्रणः क्षतं, स्मरस्य जन्मो वधः रतिस्तस्यां रतौ. स्मरं जनयतीति [कर्मण्यण्। "जनिवध्योश्च" इति वृद्धिनिषेधः, ङीप्] तस्यां कामोद्दीपिकायां वा, रजन्यां रात्रौ, रुजं पीडां, किं ते न कुरुते स्म ? [पूर्ववत्। ... तनने] यद्वा—स्मरेण जन्या कामेनोत्पादिता वा, रुजं, चन्द्रकलानुरोधेन

लोचनाभ्यां प्रोषिताखिलजनेक्षणदेशः क्षणदेशः किं न पीयते ? प्रियसखि मदनमालिनि ! । बिम्बाधरसङ्गत्या सङ्गत्यागेच्छया विरागं कुरु मधुमदारुणमालवीकपोलतलसमानो लसमानो रक्तमण्डलतया लतया त्वया विशेषः कः ? । कुरङ्गिके ! कल्पय कुरङ्गशावकेभ्यः शष्पाङ्कुरम् । किशोरिके ! कारय किशोरकस्य प्रत्यवेक्षाम् । तरङ्गिके ! तरलय कृष्णागुरुधूपपटलम् । कर्पूरिके ! पाण्डुरय कर्पूरधूलिभिः पयोधरभारम् । मातङ्गिके ! मानय मातङ्गशिशुयाचनाम् । शशिलेखे ! लिख ललाटपट्टे

---

नखक्षतादयो नारीणां काममुद्दीपयन्तीति स्पष्टं कामतन्त्रे, [“भक्ष्यगेय—” इति साधुः] (“जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । विपण्यां जननिर्वादे” इति विश्वमेदिन्यौ । “स्त्री रुग् रुजा चोपतापः” इत्यमरः ) । काऽपि मानिनीं प्रति कुलिन वक्ति, हे मदनमालिनि ! लोचनाभ्यां प्रोषितोऽखिलजनानामीक्षणदेशो नेत्रदेशो येन सः, क्षणदेशश्चन्द्रः, किं न पीयते ? विध्यलङ्कारः, “सिद्धस्यैव विधानं यत् तामाहुर्विध्यलङ्क्रियाम्” । लोचनयोर्लोचनविधानं चन्द्रदर्शनेन साफल्य-द्योतनाय, नात्युद्धतरागेयं स्वयमेव प्रियमनुनेष्यतीति भावः ; यद्वा—लोचनाभ्यां नेत्राभ्यां, प्रोषिताखिलजनेक्षणदेशः, क्षणदः सुखदशादायीशश्च पतिः, लोचनाभ्यां किं न पीयते ? । रक्तमण्डलतया लसमानोऽत एव मधुमदारुणमालवीकपोलतल-समानः ; पक्षे—रक्तमण्डलतया अनुरक्तमण्डलतया, लसमानः शोभमानः, मालवी-कपोलतलसमानता रक्तमण्डलतया, बिम्ब एव बिम्बवदा अधरस्तत्सङ्गत्या लतया त्वया को विशेषः ? न कोऽपीत्यर्थः, अतः सङ्गत्यागेच्छया विरागं कुरु, यथा क्षणदेश-स्यौषधीशत्वेनाविरोधी लतयैवं नैकविषयाकीकरणायौषधीशत्वेन क्षणदेशेन तवाप्य-विरोध उचित इति भावः । कुरङ्गिके ! इत्यादीनि सखिसम्बोधनानि, कुरङ्गशाव-केभ्यो हरिणशिशुभ्यः, शष्पं बालतृणं, कोमलं तदङ्कुरं, कल्पयोत्पादय, देहि, (“मृगे कुरङ्गवातायुः” । “पृथुकः शावकः शिशुः” । “शष्पं बालतृणं घासः” । “अङ्कुरो-ऽभिनवोद्भिद्” इति चतुर्ष्वप्यमरः ) । किशोरकस्याश्वबालकस्य, प्रत्यवेक्षामवेक्षणम् । (“बालः किशोरः” इत्यमरोऽश्वप्रकरणे । “अवेक्षा प्रतिजागरः” इति च ) । तरलय विस्तारय । काऽप्यतिविरहाकुलाऽऽह, कर्पूरिके ! कर्पूरधूलिभिः पयोधरभारं पाण्डुरय । अन्याऽऽह, मातङ्गिके ! मातङ्गशिशुयाचनां मानय सत्कुरु, पुनः पुनः

शशिलेखाम्। केतकिके! सङ्केतय केतकीमण्डपस्य दोहदम्। शकुनिके! देहि क्रीडाशकुनिभ्य आहारम्। मदनमञ्जरि! मञ्जरय सभामण्डपकदलीगृहम्। शृङ्गारमञ्जरि! सङ्कल्पय शृङ्गाररचनानि। सञ्जीविके! वितर जीवञ्जीवकमिथुनाय मरिचपल्लवम्। पल्लविके! पल्लवय कर्पूरधूलिभिः कृत्रिम-केतकीकाननम्। सहकारमञ्जरि! मञ्जरय सहकारसौरभं व्यजनवातेन। मदनलेखे! लिख मदनलेखं मलयानिलस्य। मृणालिके! देहि मृणालाङ्कुरं राजहंसशावकेभ्यः। विलासवति! विलासय मयूरकिशोरम्। तमालिके! परिमलय मलयजरसेन भवनवाटम्। काञ्चनिके! विकिर कस्तूरीद्रवं काञ्चनमण्डपिकायाम्। प्रवालिके! सेचय घुसृणरसेन बाल-प्रवालकाननमित्यन्योऽन्यं प्रणयपेशलाः प्रमदानामालापकथाः शृण्वन् कन्दर्पकेतुर्मकरन्देन सह विस्मयमकरोत्।

---

करचालनेन कुचोन्नत्यं कुम्भयोः प्रार्थयत इति भावः। शशिलेखे! ललाटपट्टे शशिलेखां लिख, स्मरविभीषिकार्थमिति भावः। केतकिके! केतकीमण्डपस्य दोहदं सङ्केतय जानीहि, कथयेति वा। ("दोहदो गर्भलक्षणे। अभिलाषे तथा गर्भे" इति हेमः)। शकुनिके! क्रीडाशकुनिभ्य आहारं देहि, ["घृमोरिडविभ्यत्वाभ्यामलोपौ"]। मदनमञ्जरीत्यादि। शृङ्गारमञ्जरि! शृङ्गाररचनानि सङ्कल्पय सम्पादय। सञ्जीविके! जीवञ्जीवकाय मरिचपल्लवं वितर देहि, ("जीवञ्जीवश्चकोरकः"। "मरिचं कोलकं कृष्णम्" इति द्वयोरप्यमरः)। पल्लविके! कृत्रिमकेतकीकाननं कर्पूरधूलिभिः पल्लवय। सहकारमञ्जरीति। मदनलेखे! मलयानिलस्य मदनलेखं मदनावस्थासूचकं लेखं लिख। मृणालिके! इति। विलासवति! मयूरकिशोरं विशेषेण लासय नर्तय। ("किशोरस्तरुणे श्रेष्ठे" इति धरणिः)। तमालिके! मलयजरसेन चन्दनरसेन, भवनवाटं गृहमार्गं, परिमलय, ("वाटः पथश्च मार्गश्च" इति त्रिकाण्डशेषः)। काञ्चनिके! काञ्चनमण्डपिकायां कस्तूरीद्रवं विकिर विक्षिप, [कॄ विक्षेपे]। प्रवालिके! घुसृणरसेन कुङ्कुमरसेन, प्रवालानां पल्लवकिशलयानां, काननं समूहं, सेचय, ("कुङ्कुमं पीतकाश्मीरं घुसृणं कुसुमान्तकम्" इति हारावली)।

मनस्यहो! भवनानामतिशायि सौन्दर्य्यम्। अहो! शृङ्गारकलाकेलिकौशलम्। तथा ह्ययं तत्काललीलावहलविरलविमलमालवीदशनकान्तिकान्तिदन्तिदन्तघटितो मण्डपः, असावपि कनकशलाकाविनिर्मितयन्त्रपञ्जरसंयतः क्रीडाशुकः इत्यादि परिचिन्तयन् प्रविश्य व्याकरणेनेव सरक्तपादेन, भारतेनेव सुपर्वणा, रामायणेनेव सुन्दरकाण्डचारुणा, जङ्घायुगलेन विराजमानां, छन्दोविचितिमिव भ्राजमानतनुमध्यां, नक्षत्रविद्यामिव गणनीयहस्तश्रवणां, न्यायस्थितिमिवोद्द्योतकरस्वरूपां, बौद्धसङ्गतिमिवालङ्कारभूषिताम्, उपनिषदमिवानन्दात्मकमुद्द्योतयन्तीं, द्विजकुलस्थितिमिव चारुचरणां, विन्ध्यगिरि-

प्रविश्य वासवदत्तां ददर्शेत्यन्वयः। व्याकरणेनेव पाणिनिप्रोक्ताष्टाध्यायिरूपेणेव, "तेन रक्तं रागात्" इत्युपलक्षितः पादोऽध्यायतुरीयांशः, तत्सहितेन; पक्षे—रक्तपादेन लोहितचरणेन सह सरक्तपादं तेन। भारतेनेव सुपर्वणा शोभनपरिच्छेदयुतेन; पक्षे—सुपर्वणा शोभनग्रन्थियुतेन। ("ग्रन्थिर्ना पर्वपरुषी" इत्यमरः)। रामायणेनेव सुन्दरकाण्डेन चारुणा; पक्षे—सुन्दरकाण्डवच्चारुणा। ("काण्डं चावसरे बाणे नाले स्कन्धे च शाखिनाम्। स्तम्बे रहसि वर्गे च" इति धरणिः)। जङ्घायुगलेन विराजमानाम्। विन्ध्यगिरिश्रियमिव सुनितम्बां सुन्दरकटकाम्; ("कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः) पक्षे—शोभनकटिपश्चाद्भागां, ("पश्चान्नितम्बः स्त्रीकट्याः" इत्यमरः)। छन्दोविचितिमिव भ्राजमानतनुमध्यां, तनुमध्याभिधं छन्दः,—"त्यौ स्तस्तनुमध्या"; पक्षे—भ्राजमानं तनुमध्यं यस्याः। नक्षत्रविद्या ज्योतिःशास्त्रमिव, गणनीयं हस्तो हस्तर्क्षं, श्रवणं श्रवणर्क्षं च यत्र; पक्षे—गणनीयमत्युत्कृष्टतया हस्तश्रवणं यस्याः। न्यायस्थितिमिवोद्द्योतकर आचार्यो न्यायवार्त्तिककृत्, तत्स्वरूपां तदात्मिकाम्; विद्यातद्वतोरभेदविवक्षाऽत्र त्रिमुनिव्याकरणमितिवत्, भेदविवक्षायां तु—उद्द्योतकरेण स्वरूपं यस्याः, उक्तानुक्तदुरुक्तचिन्ताकृता वार्त्तिककृता स्वरूपं यस्याः प्रतिपादितरूपं, न तु खण्डितं स्वरूपमित्यर्थः; पक्षे—उद्द्योतकरं प्रकाशकरं, स्वरूपं यस्याः, ("प्रकाशो द्योत आतपः" इत्यमरः)। बौद्धसङ्गतिमिवालङ्कारो धर्मकीर्त्तिकृतो ग्रन्थविशेषः, तेन भूषिताम्; पक्षे—अलङ्कारो भूषणं, तेन भूषिताम्। उपनिषदमिवैकमानन्दमद्वितीयं ब्रह्मानन्दम्, उद्द्योतयन्तीम्; तदुक्तम्—"आनन्दो ब्रह्मणो रूपं तच्च मोक्षे

श्रियमिव सुनितम्बां, तारामिव गुरुकलत्रतयोपशोभितां, शतकोटिमिव मुष्टिग्राह्यतनुमध्यां, प्रियङ्गुश्यामामश्वीमिव प्रियदर्शनां, ब्रह्मदत्तमहिषीमिव सोमप्रभां, दिग्गजकरेणुकामिवानुपमां, वेलामिव तमालपत्रप्रसाधिताम्, अश्वतरकन्यामिव मदालसां वासवदत्तां ददर्श।

अथ तां प्रीतिविस्फारितेन चक्षुषा पिबतः कन्दर्पकेतोर्जहार चेतनां मूर्च्छावेगः। तमपि पश्यन्ती वासवदत्ता मुमूर्च्छ। अथ मकरन्दसखीजनप्रयत्नलब्धसंज्ञौ तावेकासनमलञ्चक्रतुः।

ततो वासवदत्तायाः प्राणेभ्योऽपि गरीयसी सर्वविस्रम्भपात्रं कलावती नाम कन्दर्पकेतुमुवाच—"आर्य्यपुत्त्र! नायं विस्रम्भ-

---

प्रतिष्ठितम्" इति; पक्षे—एकमुत्कृष्टम्, आनन्दमाह्लादम्। श्रियं लक्ष्मीमिव चारु सुन्दरं, चरणमाचारो यस्यास्ताम्; पक्षे—चारु रम्यं, चरणं यस्याः, ("चरणोऽस्त्री बहृचादौ मूले गोत्रे पदेऽपि च")। तारामिव बृहस्पतिभार्य्यामिव, गुरुकलत्रतयोपशोभिताम्; पक्षे—बृहत्कटिविततयोपशोभितां, ("कलत्रं श्रोणिभार्य्ययोः" इत्यमरः)। शतकोटिमिव वज्रयष्टिमिव, मुष्टिग्राह्यो मध्यो मध्यदेशो यस्याः; पक्षे—मध्यमवयवं यस्याः, ("मध्यमं चावलग्नं च मध्योऽस्त्री" इत्यमरः)। प्रियङ्गुश्यामामश्वीमिव प्रियदर्शनां तन्नामिकाम्; पक्षे—प्रियं दर्शनं यस्यास्ताम्। ब्रह्मदत्तमहिषीमिव सोमप्रभां तदभिधानाम्; पक्षे—सोमस्येव चन्द्रस्येव, सोमा रम्या वा, प्रभा यस्यास्तां, ("सोमो मनोहरे चन्द्रे" इति विश्वः)। दिग्गजः कुमुदः, तत्करेणुकामिवानुपमां तदाख्याम्; ("करिण्योऽभ्रमुः कपिला पिङ्गलाऽनुपमाः क्रमात्" इत्यमरः) पक्षे—अनुपमामुपमारहिताम्। वेलामिव समुद्रतीरभूमिमिव, तमालपत्रैः प्रसाधितामलङ्कृताम्; पक्षे—तमालपत्रं तिलकं, तेन प्रसाधिताम्, ("तमालपत्रं तिलकचित्रकाणि" इत्यमरः)। अश्वतरकन्यामिव मदालसां तन्नामधेयाम्; पक्षे—मदेन यौवनजन्येन, अलसां मन्दगतिम्।

अथेति स्पष्टम्। मकरन्देन तत्कृतोपचारेण, सखीजनेन तत्कृतोपचारेण, यथाक्रमं लब्धसंज्ञौ तौ वासवदत्ताकन्दर्पकेतू, एकमभिन्नम्, आसनमलञ्चक्रतुः।

तत इति। विस्रम्भपात्रं विश्वासस्थानम्। आर्य्यपुत्त्रेति। "आर्य्यपुत्त्रेति सख्योक्तिः;

कथाया अवसरः, ततो लघुतरमेवाभिधीयसे। त्वत्कृते याऽनया वेदनाऽनुभूता, सा यदि नभः पत्रायते, सागरो मेलानन्दायते, ब्रह्मायते लिपिकरः, भुजगराजायते कथकः, तदा किमपि कथमप्यनेकैर्युगसहस्रैरभिलिख्यते कथ्यते वा। त्वयाऽपि राज्य-मुज्झितं, किं बहुना? आत्मा सङ्कटे समारोपित एव। एषा-ऽस्मत्स्वामिदुहिता पित्रा प्रभातप्रायायां रजन्यां यौवनाति-क्रान्तिदोषशङ्किना हठेन विद्याधरचक्रवर्त्तिनो विजयकेतोः पुत्राय पुष्पकेतवे पाणिग्रहणेन दातव्येति। अनयाऽप्यालोचित-मद्य, यदि अभ्यर्हितं जनमादाय तमालिका नागच्छति, तदा-ऽवश्यमेव मया हुतवहे शयितव्यमिति। तदस्याः सुकृतवशेन महाभाग! इमां भूमिमनुप्राप्तः, तदत्र यत् साम्प्रतं, तत्र भवानेव प्रमाणम्" इत्युक्त्वा विरराम।

अथ कन्दर्पकेतुः सप्रश्रयमानन्दसागरलहरीभिराप्लुत इव,

---

पतिः पत्रीगनेन वा" इति भरतः। त्वत्कृते त्वदर्थम्, अनया वासवदत्तया, या या वेदना अनुभूता सा सा यदि नभ आकाशः, पत्रवदाचरति पत्रायते, ("उपमानादाचारे" इति क्यङ्) अतिवैपुल्यार्थमिदमुक्तम्। सागरो मेलानन्दायते मसीपात्रायते, गाम्भीर्यार्थं चेदं, ("मेलानन्दो मसीपात्रम्" इति हारावली)। लिपिकरो लेखकः, ["दिवाविभा—" इति टः] ब्रह्मायते, चिरजीवितार्थमिदम्। कथको वक्ता, भुजगराजायते भुजगश्रेष्ठ-शेषायते, योगशास्त्रप्रवर्त्तकत्वेनान्तरभावाभिज्ञत्वार्थं, शब्दशास्त्रार्णवपारावारीणत्वेन बहु-मुखत्वेन बहुधाऽभिप्रायाविष्कारकर्तृत्वार्थं, वैद्यकशास्त्राचार्य्यत्वेन विरहवेदनयाऽस्या इयमवस्था, न ज्वरादिजन्येति वक्तृतार्थं चेदम्; तथा चोक्तं—"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन। योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलि-रानतोऽस्मि॥" इति, तदा कथमप्यनेकैर्युगसहस्रैः कथ्यतेऽभिलिख्यते वा। सम्भावना-ऽलङ्कारः, "सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये" इति लक्षणात्। त्वयेत्यादि। प्राणविपदर्थं विवादः। अनया वासवदत्तया, आलोचितं चिन्तितं, यद्यभ्यर्हितं त्वल्लक्षणं जनम्। हुतवहे वह्नौ, शयितव्यं प्रवेष्टव्यम्। महान् भागो भाग्यं यस्य तत्सम्बोधनं, ("भागो भाग्यैकदेशयोः" इति विश्वः)। साम्प्रतं युक्तम्। प्रमाणमुत्तरकर्त्तव्यतायामित्यर्थः।

अथ सखीवाक्यश्रवणोत्तरमानन्दसागरलहरीभिराप्लुतः कन्दर्पकेतुः

भुवनत्रयराज्याभिषिक्त इव, भीतभीत इव, वासवदत्तया सह सम्भ्रान्तो मकरन्दं वार्त्ताऽन्वेषणाय तत्रैव नगरे नियुज्य भुजङ्गेनेव सदागत्यभिमुखेन मनोजवनाम्ना तुरगेण तया सह नगरान्निर्जगाम।

क्रमेण च जाङ्गलकवलनाभिलाषमिलितनिःशङ्ककङ्ककुल-सङ्कुलेन, अर्द्धदग्धचिताचक्रमिमसिमायमानविकटकटत्कणाचटुल-कटपूतनोत्तालवेतालरवभीषणेन, शूलशिखरारोपितशङ्कित-वर्णकर्णनासिकच्छेद-रुधिरपटलपतित-भाङ्कारि-भम्भराली-भार-भरितभूमिभागबीभत्सेन, कटाग्निदह्यमानापटुचटचटत्करोटी-

---

भीतभीत इवाननुभूतपुरुषसङ्गेयं मा कदाचिदुद्विग्ना भूत्, तथा कथं रतिरसभङ्गः स्यादिति सभय इवेत्यर्थः। सप्रश्रयं सावधानं, वासवदत्तया सम्भ्रान्त्या मत्या, कामचारानुज्ञां विधाय तया सह रतिं कृत्वेत्यर्थः, सम्पूर्णो मन्त्रि कामचारानुज्ञार्थकः। वार्त्ताऽन्वेषणाय मकरन्दं तत्रैव नगरे नियुज्य भुजङ्गेनेव सदागतिर्वायुः, तदभिमुखेन; पक्षे—सदा सर्वदा, गत्यभिमुखेन मनोजवनाम्ना तुरगेण तथा वासवदत्तया सह, नगरान्निर्जगाम, दुर्गगमनादौ स्त्रीणामनधिकारात्, [अत्र "सहयुक्तेऽप्रधाने" इत्यप्रधाने तृतीया]।

क्रमेण श्मशानवाटेन निमिश्रमातादनेकयोजनं गत्वा विन्ध्याटवीं विवेशेत्यन्वयः। जाङ्गलकवलनाभिलाषेण मांसग्रासाभिलाषेण, मिलितं निःशङ्कं कङ्कानां पक्षि-विशेषाणां, कुलं तेन सङ्कुलेन, ("जाङ्गलं जलदेशे स्याज्जाङ्गलं पिशितेऽपि च" इति विश्वः)। अर्द्धदग्धचिताचक्रे मिमसिमायमान एतादृक्शब्दविशिष्टः, विकटो भयानकः, कटो मृतशरीरं, तत्परा चटुलकटपूतनानामुत्तालवेतालानां रवेण भीषणेन, ("कटः समयभेदेऽपि तृणेऽपि मृतकेऽपि च" इति विश्वः)। शूलशिखरारोपितस्य शङ्कितवर्णस्य चोरस्य, कर्णनासिकमिति [प्राण्यङ्गत्वादेकवद्भावः] तच्छेदरुधिर-पटले कर्णनासिकच्छेदनिर्गतरुधिरपटले, पतिता भाङ्कारिभम्भराल्यो भाङ्कारोऽव्यक्त-शब्दः, तद्युक्ता भम्भराल्यो मक्षिकाः, ताभिर्भरितम् [इत्यन्तो न तु क्तान्तः] पूरितं, तादृग्भूमिभागेन बीभत्सेन, ("चोरः शङ्कितवर्णश्च कुम्भकः प्रकीर्तितः" इत्युत्तरतन्त्रम्। "भम्भरा मक्षिका ज्ञेया भम्भराली च सा मता" इति हारावली)।

टङ्कारभैरवरवेण, शूलपाणिनेव कपालावलिभस्मशिवावङ्किभूत-भुजगावरुद्धदेहेन, पुरुषातिशयेनेवानेकमण्डलकृतसेवेन, श्मशान-वाटेन गत्वा निमिषमात्रादेवानेकशतयोजनं प्रलयकालवेलामिव समुदितार्कसमूहां, नागराजस्थितिमिवानन्तमूलां, सुधर्मामिव स्वच्छन्दस्थितकौशिकां, सत्पुरुषसेवामिव बहुश्रीफलाढ्यां, भारत-समरभूमिमिव दूरप्ररूढार्जुनां, पुलोमकुलस्थितिमिव सहस्र-नेत्रोचितेन्द्राणिकां, शूलपालचित्तवृत्तिमिव फलितगणिकारिकां, सज्जनसम्पदमिव विकसिताशोकसरलपुन्नागां, शिशुजनलीला-

---

जटाशिरस्कपाणि:, तेन दह्यमानापटुचटचटशब्दकरोटिसंघुष्यशिरोऽस्थि, तस्याटङ्कारेव भैरवरवेण भयानकशब्दविशिष्टेन, ("शिरोऽस्थनि करोटिः स्त्री" इत्यमरः)। शूलपाणिनेव शिवेनेव, कपालावलीत्यादि, शिवा गौरी, पक्षे—क्रोष्टी। पुरुषेष्वति-शयो यस्य स महाराजः, तेनेवानेकमण्डलं राष्ट्रम्; पक्षे—श्वा, तत्कृतसेवेन। प्रलय-कालवेलामिव समुदितोऽर्कसमूहः सूर्यसमूहो यस्याम्; पक्षे—अर्को वृक्षविशेषः, ("अर्काह्वबसुकास्फोट:" इत्यमरः) "मदार" इति भाषायाम्। नागराज-स्थितिमिवानन्तः शेषः, मूलमादिकारणमस्याः; पक्षे—अनन्तानि मूलानि यस्याम्। सुधर्मामिव देवसभामिव, स्वच्छन्दं स्थितः कौशिक इन्द्रो यस्याम्; पक्षे—कौशिक उलूकः। सत्पुरुषसेवामिव बहुश्रीयुक्तैः फलैराढ्याम्; पक्षे—श्रीफलो बिल्वः। ("बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि" इत्यमरः)। भारतसमरभूमिमिव दूरप्ररूढो-ऽर्जुनः पार्थो यस्याम्; पक्षे—अर्जुनो वृक्षविशेषः। ("इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः)। पुलोमकुलस्थितिमिव सहस्रनेत्रायेन्द्राय, उचिता योग्या, इन्द्राणी शची यस्याम्; ["मयूरव्य" इति कप्] पक्षे—सहस्रनेत्रैः सहस्रमूलैः, उचिता योग्या, इन्द्राणी शतावरी। ("बहुधारा महेन्द्राणी शक्राणी नयवादिनी" इति रभसः)। शूलपाणी वेश्यापाणी वेशिकी वा, तच्चित्तवृत्तिमिव फलिता सफला, वेशिकेभ्यो धनलाभात् सुरतसुखलाभाद्वा, गणिकानां वेश्यानाम्, कारिका आगतिकारकं वा यस्यास्ताम्; [कृ इतो धात्वर्थनिर्देशे ण्वुल्, वृद्धिः। पर्यायान्तरे चाङ्पूर्वः। "प्रत्ययस्थात्—" इतीकारः] पक्षे—गणिकारिका वृक्षविशेषः, ("श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका" इत्यमरः) जयपर्णं इति प्रसिद्धः। सज्जनसम्पदमिव विकसिता हृष्टाः, अशोकाः शोकरहिताः, सरला उदाराः, पुरुषा नागा इव पुन्नागाः पुरुषश्रेष्ठा यस्यां इतीयर्थकौ

मिव कृतधावोद्धृतिं, क्वचिद्राघवचित्तवृत्तिमिव वैदेहीमयीं, क्वचित् क्षीरसमुद्रमथनवेलामिवोज्जृम्भमाणामृतां, क्वचिन्नारायणशक्तिमिव स्वच्छन्दापराजितां, क्वचिद्वाल्मीकिसरस्वतीमिव दर्शितेक्ष्वाकुवंशां, लङ्कामिव बहुपलाशसेवितां, कुरुसेनामिवार्जुनशरनिकरपरिवारितां, नारायणमूर्त्तिमिव बहुरूपां, सुग्रीवसेनामिव पनसचन्दनकुमुदनलसेवितताम्, अविधवामिव सिन्दूरतिलकभूषितां प्रवालाभरणां च, कुरुसेनामिवोलूकद्रोण-

---

वा ताम्; ("मृगेन्द्रपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः) पक्षे—विकसिताः फुल्लाः, अशोकाः सरलाः पुन्नागा यस्यां तां, ("पीतद्रुः सरलः पूतिकाष्ठम्"। "पुन्नागः पुरुषस्तुङ्गः केसरो देववल्लभः" इति द्वयोरप्यमरः)। शिशुजनलीलामिव कृता धात्रा उपमात्रा, धृतिर्यस्याः; पक्षे—धात्री आमलकी। राघवो रामचन्द्रः, तच्चित्तवृत्तिमिव वैदेहीमयीं सीतामयीम्; पक्षे—वैदेही पिप्पली, ("वैदेही रोचनासीता-वणिक्स्त्रीपिप्पलीष्वपि" इति विश्वप्रकाशः)। क्वचित् क्षीरसमुद्रमथनवेलामिवोज्जृम्भमाणममृतं यस्यां ताम्; पक्षे—अमृता गुडूची, ("गुडूची तन्त्रिकाऽमृता" इत्यमरः)। क्वचिन्नारायणशक्तिमिव स्वच्छन्दा स्ववशा, अपराजिता पराजयरहिता ताम्; पक्षे—स्वच्छन्दा निसर्गप्रसूता, अपराजिता विष्णुक्रान्ता, ("विष्णुक्रान्ताऽपराजिता" इत्यमरः)। वाल्मीकिसरस्वतीमिव दर्शित इक्ष्वाकोः राज्ञः, वंशः सन्ततिर्यया ताम्; पक्षे—("इक्ष्वाकुः कटुतुम्बी स्यात्" इत्यमरः)। लङ्कामिव बहुपलाशैः राक्षसैः सेविताम्; पक्षे—पलाशो वृक्षः। कुरुसेनामिवार्जुनशरनिकरैः परिवारिताम्; पक्षे—अर्जुनशरौ वृक्षविशेषौ, तयोर्निकरैः परिवारिताम्। नारायणमूर्त्तिमिव बहुरूपामनेकस्वरूपाम्; पक्षे—बहुरूपां बहुपशुकां, ("रूपं तु श्लोकशब्दयोः। पशावाकाशे सौन्दर्ये नाणके नाटकादिके॥ ग्रन्थावृत्तौ स्वभावे च" इति हैमः)। सुग्रीवसेनामिव पनसचन्दनकुमुदनलैस्तदभिधानैर्वानरैः, सेविताम्; पक्षे—पनसचन्दने वृक्षौ, कुमुदं पुष्पं, ("पनसः कण्टकिफले कण्टके कपिरुग्भिदोः"। "चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यात्"। "कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ। दैत्यान्तरे च दिङ्नागयोगयोरपि कीर्त्तितः॥" इति त्रिष्वपि विश्वप्रकाशः)। अविधवामिव सिन्दूरस्य तिलकेन भूषिताम्; पक्षे—सिन्दूरतिलकौ वृक्षविशेषौ, ("सिन्दूरस्तरुभेदे स्यात्

शकुनिसनाथां धार्त्तराष्ट्रान्वितां च, अम्लानजातिभूषितामप्यकुलीनवंशां, दर्शिताभयामपि विभीषणां, सततहितपथ्यामपि प्ररूढगुल्मां, षट्पदव्याकुलामपि द्विपदानाकुलां, द्विजकुलभूषितामप्यकुलीनवंशां विन्ध्याटवीं विवेश। अनन्तरं तयोर्निद्रामादाय जगाम रजनी।

सिन्दूरं रक्तचूर्णके" इति विश्वः। "तिलकः क्षुरकः श्रीमान्" इत्यमरः) पत्ररचनाद्दिवत्र सिन्दूरधारणं प्रोषितभर्तृकाणामित्यविशेषोक्तिः, प्रवालाः अकुष्टकेशा विद्रुमा वा, आभरणं यस्यास्ताम्; पक्षे—प्रवालाभरणां नवपल्लवाभरणाम्। कुवलेनामिवोलूकद्रोणशकुनिभिसत्तदभिधानैर्वीरैः, सनाथाम्; पक्षे—उलूकः कौशिकः, द्रोणः काकः, शकुनिः पक्षिसामान्यं, तैः सनाथां, धार्त्तराष्ट्रैर्धृतराष्ट्रसतपुत्रैः, अन्विताम्; पक्षे—धार्त्तराष्ट्राः पक्षिणः, ("धार्त्तराष्ट्राः सितेतरैः" इति राजहंसप्रकरणेऽमरः)। अम्लानजातिभूषितामुत्तमजातिभूषितामपि, न कुलीन उत्तमकुलविशिष्टः, वंशः सन्तानो यस्यास्तामिति विरोधः; ("वंशोऽन्वायः सन्तानः" इत्यमरः) यद्वा—न कुलीनस्योत्तमकुलस्य, वंशो गर्वो यस्याः; ("वंशो वेणौ कुले गर्वे पृष्ठाद्यवयवेऽपि च" इति विश्वमेदिन्यौ) परिहारस्तु—अम्लानी महासहा, जातिर्मालती, ताभ्यां भूषितां, भकौ लीना वंशा वेणवो यस्याम्, ("अम्लानस्तु महासहा"। "सुमना मालती जातिः" इति द्वयोरप्यमरः)। दर्शितमभयं भयाभावो यया तादृश्यपि विशेषेण भीषयतीति विभीषणेति विरोधः; दर्शितमभयं नलदम्, अभया हरीतकी वा यया विभीषणा जननसञ्चाररहित्यादिति परिहारः, ("अभयं नलदं सेव्यम्"। "अभया त्वव्यथा पथ्या" इति द्वयोरप्यमरः)। सततं हितं पथ्यं यस्यास्तामपि अपथ्ययोगभिन्नामपि, प्ररूढगुल्मामिति विरोधः; सततं हिता याता, पथ्या हरीतकी यया तां, [हि गतौ, क्तः, गत्यर्थत्वात् प्रापणार्थः] प्ररूढा गुल्मा यस्याम्, ("अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः)। षट्पदैर्भ्रमरैः, व्याप्तापि द्विपदैर्मनुष्यैः, अनाकुला, असुखयैऽपिः, अगम्यत्वादिति भावः, यत्तु जगद्धरः षट्पदेषु पदद्वयसद्भावादिति भाव इति तच्चिन्त्यम्; गौणप्युत्तरा उक्ता पूर्वसंज्ञां बाधते इति विरोधानुत्थानात्, न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते; यद्वा—द्विपानां हस्तिनां, दानेन मदजलेन, अव्यानां, षट्पदैर्भ्रमरैः, व्याप्ताम्। द्विजकुलेन भूषितामप्यकुलीनवंशां, ब्राह्मणकुलस्य सर्वोत्कृष्टतया विरोधः; परिहारस्तु—द्विजकुलैः पक्षिसमूहैः, भूषिताम्। अनन्तरं तयोर्वासवदत्ताकन्दर्पकेत्वोः, निद्रामादाय रजनी रात्रिः, जगाम।

क्रमेण च कालकैवर्त्तेन तमिस्राऽऽनायं प्रक्षिप्य गगनमहासरसि सजीवशफरानिकर इवापक्रियमाणे तारागणे, रक्तांशुकपटे, विषमप्ररूढबिसलताशरयन्त्रकानुगतशतपत्रपुस्तकसनाथे, मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकरसान्द्रमन्द्रमञ्जुस्वनैः स्वधर्ममिव पठति विकचकमलाकरभिक्षौ, कृषीवलेनेव कालेन तिमिरबीजेष्विव मधुकरेषु कुमुदक्षेत्रेषु मधुरमकर्दमित-परागपङ्केषु घनघट्टमानदलेषु भ्रमरेषु व्याजात् पङ्कजे-षूप्यमानेषु, रजोमुर्मुरसनाथमधुकरपटलानुगतोद्दण्डपुण्डरीकव्याजाद्धूपपटलमिव भगवते किरणमालिने प्रयच्छन्त्यां कमलिन्यां, रजनीवधूकरतलद्वयोत्कलित-पतत्प्रभात-मुसलाहति-क्षतान्तरे उलूखले इव चन्द्रे कण्डनकीर्णेष्विव तण्डुलेषु तारागणेषु मीलत्सु, सन्ध्याताम्रमुखेनेव वासरवानरेण नभस्तलमारोहता शाखाभ्य इव कम्पिताभ्यो दिग्भ्यो विकचप्रसून

---

क्रमेणोक्तविशेषणयुक्तेषु तारादिषु कन्दर्पकेतुर्वासवदत्तया सह लतागृहे सुष्वापेत्यन्वयः। कालेत्यादि।—कैवर्त्तो धीवरः, आनायो जालं, ("कैवर्त्ते दाशधीवरौ"। "आनायः पुंसि जालं स्यात्" इति द्वयोरप्यमरः)। रक्तांशवः एव रक्तांशुकाः, [स्वार्थे कन्] त एव पटो यस्य तस्मिन्; रक्तांशुकं रक्तवस्त्रं, पटो वसनं यस्येति च। विषमप्ररूढबिसलतेव शरयन्त्रकं तालपत्रीयपुस्तकमध्यस्थरज्जुः, तेनानुगतं शतपत्रं कुशेशयं, तदेव पुस्तकं तेन सनाथे, "सरत" इति भाषायाम्। मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकराणां मन्द्रैर्गम्भीरैः, मञ्जुस्वनैः स्वधर्मं पठतीव विकचे विगतकेशे विकसिते च, कमलाकरभिक्षौ, ("मन्द्रस्तु गम्भीरे" इति स्वरप्रकरणेऽमरः। "शतपत्रं कुशेशयम्" इति कमलप्रकरणे च)। कृषीवलेनेत्यादि।—कृषीवलः कर्षकः, ("कर्षकश्च कृषीवलः" इत्यमरः) उप्यमानेषु [टुवप बीजसन्ताने]। रजोमुर्मुरेत्यादि।—किरणमालिने सूर्याय। रजनीत्यादि।—आहतिराघातः, क्षतान्तरे खण्डितमध्यभागे, नायं कलङ्कः, किन्तु मुसलाघातरन्ध्रेणाकाश एव दृश्यते इति द्योतनाय क्षतान्तरत्ववर्णनं, कण्डनेत्यादि। सन्ध्येत्यादि।—सन्ध्येव आताम्रस्येव, आताम्रं मुखं यस्य तादृशेन वासरवानरेण, ताम्रमुखत्ववर्णनं

इव तारागणे चन्द्रमण्डले फले च निपतति, तारागणशालि-
तण्डुलधवलनभोऽङ्गणं स्फुरदरुणतरुणचूडाचारुवदने वासर-
कृकवाकौ चरितुमवतरति, मत्ताङ्गतिप्रहृष्टो वारुणीसमागमात्
द्विजपतिरेष पतिष्यतीति हसन्त्यामिवाखण्डलककुभि, अरुण-
केसरिकराघातनिहतान्धकारकरीन्द्ररुधिरधाराभिरिव, उदय-
गिरि-शिखर-निर्झर-धौतधातु-धाराभिरिव, तुङ्गतुरङ्गखर-
खुरपुटपाटितपद्मरागच्छटाभिरिव, केसरिकरतलाहतमत्त-
मातङ्गोत्तमाङ्गसङ्गलदसृक्प्रसारिणीभिरिव, उदयाचलकूटकोटि-
प्ररूढजपाकुसुमकान्तिभिरिव, त्रिभुवनकार्य्यसम्पादकप्रभानु-
रागरसैरिव रक्तमण्डले, ताराकुमुदग्रहणाय प्रसारितहस्ते एव
कुङ्कुमरागारुणे प्राचीविलासिन्याः, पूर्वाचलभोगीन्द्रफणोपले,
गगनेन्द्रनीलतरुकनककिसलये, नभोनगरप्राचीरकनककुम्भे,

---

मध्यजातीयनिवहाये। स्फुरदरुण एव सूर्य्यसारथिरेव, तरुणचूडा तया चारुवदने, स्फुरन्त्यारुणया रक्तया, तरुणचूडया चारुवदने कृकवाकौ चरितुं भक्षणार्थं, तारागण एव शालितण्डुलं तेन धवलं नभोऽङ्गणमवतरति, [मेघा वर्षन्तीतिवत् पक्षिष्वेचरतेः कर्म नोपात्तम्]। मत्तङ्गतेः प्रहृष्ट एव द्विजराजश्चन्द्रः, वारुणी पश्चिम-दिक्, तत्सङ्गमात् पतिष्यति इति हसन्त्यामिवाखण्डलककुभि पूर्वदिशि, मया सह यदा सङ्गतस्तदोभयोः समवयस्कताऽऽसीत्, इदानीं त्वपराङ्गना उपभुक्ताऽपि प्रवयस्का-ऽऽसीदयमपि क्रान्तस्तथा चात्मसारोऽस्योत्सुक्यादापतिष्यतीति भावः, तथा च यत्सुख-लोभान्मां परित्यज्य यातवत् सुखं नाप्स्यतीत्युपहासः, उक्तं चान्यत्र—"बालोपभुक्ता वयसाऽदधाति पतिं युवाङ्गं तरुणी करोति। प्रौढा करं निश्चितमेव सूते वृद्धा नितान्तं बलमीवदाति ॥" इति ; द्विजराजो ब्राह्मणश्रेष्ठः, वारुणी मदिरा, पतिष्यति ब्रात्यत्वमेष्यति। रक्तमण्डलेऽरुणमण्डले, भास्करे उदयमारोहतीत्यन्वयः। करीन्द्र-त्यादि। धातुर्गैरिकः। पद्मरागो मणिः। असृग् रुधिरं, ("रुधिरेऽसृग्लोहितास्र" इत्यमरः। "प्रसारिणी प्रवाहिका" इति हारावली)। कूटः शृङ्गम्। अनु-रागो लोकानां प्रीतिः। ताराकुमुदेत्यादि। फणोपले फणारत्ने। गगनमाकाश एव, इन्द्रनीलतरुः कनककिसलये स्वर्णपल्लवं, राजभवनादौ निर्मितम् रूपं,

नभसोऽरुणाकारे, प्राचीललाटतटकुसुम्भाम्बुबिन्दौ, सन्ध्यावनलतैककुसुमे, मञ्जिष्ठारक्तपट्टसूत्रसदृशे, सन्ध्यारागगुणगुम्फिते, प्राचीकाञ्चनदीनारचक्रे इव, वासरविद्याधरमिडगुटिके इव, धातुरागारुणदिग्गजपादतलानुकारिणि विभावरीतिमिरतस्करे भास्करे उदयमारोहति, माञ्जिष्ठचामरे इव दिग्गजेषु, महाभारतसमरभूमिरुधिरोद्गारे इव कुरुक्षेत्रेषु, सुरराजशरासनकान्तिलेपे इव जलदच्छेदेषु, काषायपटे इव शाक्याश्रममटिकासु, कौसुम्भरागे इव ध्वजपटपल्लवेषु, फलपाके इव कर्कन्धुषु, कुङ्कुमच्छटारसे इव व्योममहासौधाङ्गणस्य, सन्ध्यारुणजवनिकापटे इव कालनर्त्तकस्य, बालप्रवालभङ्गारुणे प्रसरति बालातपे, चणेन च चाटुचटुलचक्रवाकहृदयशोकसन्तापहरणादिव, दहनसमर्पिततेजःप्रवेशादिव, दिननाथकान्तोपलानलसङ्गादिव, उष्णायमानमुष्णरश्मेराश्रयति रश्मिसञ्चये कन्दर्पकेतुः सर्वरात्रजागरणपरवशाहारशून्यशरीरतया निश्चेतनोऽनेकयोजनशतभ्रमणखिन्ना वासवदत्तयाऽप्येवंविधया सह लतागृहे मन्दमारुतान्दोलितकुसुमपरिमललुब्धमुग्धपरिभ्रमद्भ्रमरझङ्काररमनोहरे तत्कालागतया निद्रया गृहीतो निःस्पन्दकरणग्रामः सुष्वाप ।

---

तव रेखागतग्रन्थायाम् तरुणा । नभ इत्यादि ।—प्राचीरं नगरप्रान्ते कण्टकादिवेष्टनं, ("प्राचीरं प्रान्ततो वृतिः" इत्यमरः) । प्राचीललाटतटे कुसुम्भाम्बुबिन्दौ महारजनजलबिन्दौ, ("स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि" इत्यमरः) । दीनारचक्रं निष्कचक्रं, ("दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः) । तस्करे मोषके, ("दस्युतस्करमोषकाः" इत्यमरः) । एतादृशे बालातपे प्रसरति । दिग्गजकपोले माञ्जिष्ठं मञ्जिष्ठारक्तं, चामरमिव, ["तेन रक्तम्" इत्यण्] । सुरराजशरासनमिन्द्रधनुः । काषायं कषायरक्तम् । शाक्यो बौद्धभेदः । मटिका "मठी" इति भाषायाम् । कर्कन्धुर्बदरी, ("कर्कन्धुर्बदरी कोली" इत्यमरः) । जवनिका तिरस्करिणी, ("प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा" इत्यमरः) । प्रवालो विद्रुमः । चणेन चोष्णरश्मेः सूर्यस्य, रश्मिसमूह उष्णायमानमाश्रयतीत्यन्वयः । दिननाथकान्तोपलं सूर्यकान्तमणिः । निःस्पन्दकरणग्रामः स्वस्वविषयग्रहणासमर्थेन्द्रियवर्गः ।

ततो वणिजीव प्रसारिताम्बरे, महादावानले इव सकल-काष्ठोद्दीपिनि पतङ्गमण्डले मध्यन्दिनमारूढे कथमपि कन्दर्प-केतुः प्रियया विनाकृतं लतागृहमवलोक्योत्थाय च तत इतो दत्तदृष्टिः क्षणं विटपेषु, क्षणं लताऽन्तरेषु, क्षणमन्धकूपेषु, क्षणं शुष्कपर्णराशिषु, क्षणं तरुशिखरेषु, क्षणमाकाशे, क्षणं दिक्षु विदिक्षु च भ्रमन्ननवरतविरहानलदह्यमानहृदयो विललाप —"प्रिये! वासवदत्ते! देहि मे दर्शनं, किं परिहासेनान्त-रितासि? त्वत्कृते यानि मया दुःखान्यनुभूतानि तेषां त्वमेव प्रमाणम्। हा प्रिय! मकरन्द! पश्य मे दैव-दुर्विलसितं, किं मया न कृतमवदातं कर्म? अहो! दुर्विपाका नियतिः, अहो! दुरतिक्रमा कालगतिः, अहो! ग्रहाणा-

---

तत उभयोर्मित्रोत्तरम्। पतङ्गमण्डले सूर्यमण्डले, नभोमध्यमारूढे सतीत्यन्वयः। वणिजीव प्रसारिताम्बरे प्रसारितवस्त्रे; पक्षे—अम्बरमाकाशम्। काष्ठमिन्धनं, काष्ठा दिक्, दीपिनि प्रकाशके दाहके च, ("पतङ्गौ पक्षिसूर्यौ च"। "अम्बरं व्योम-वाससी" इत्युभयत्राप्यमरः)। अथ कन्दर्पकेतुर्दैवेनेति कर्तृपदमध्याहार्यम्। प्रियया विनाकृतं लतागृहमवलोक्य विललापेत्यन्वयः, [विनार्थयोगे "पृथग्विनानानाभिः" इति तृतीया]। विरहादुन्मादं वर्णयति। परिहासार्थमन्तर्हिता स्यादिति। क्षणं विटपेषु शाखाविस्तारेषु, क्षणं लतान्तरेष्वन्विष्यन्, तत्र तामनुपलभ्य अङ्कते, ननु नेयं परिहासेनान्तरिता पूर्वं, मया नेयं विप्रलब्धा, अस्मदागमनानभिज्ञा क्षुत्पिपासार्ता श्रान्ता तादृगनुरागा सेयं शिरीषमृद्वङ्गी भीषणे प्रदेशे कथं मां परित्यज्य यास्यतीति। मानुषोचिताहारपानानुपलम्भादन्धकल्पेति केनापि मार्गेण वा न नीता स्यादिति क्षणमन्धकूपेषु। क्षणं शुष्कपर्णराशिषु श्वापदभयागात् तादृशोपाया वा तत्क्षण एवापगतजीविता भीरुत्वेन शयनस्थाने एव परित्यक्ता स्यात्। अथ सुरोरगा केनापि दिव्यविहारिणा विद्याधरादिना वा अपहृता स्यादिति क्षणं तरुशिखरेषु, क्षणमाकाशे, क्षणं दिक्षु विदिक्षु च। क्वाप्यनुपलम्भादनवरतविरहानलदह्यमानहृदयः अत एवापगततर्कः आह, प्रिये! इत्यादि।—दैवदुर्विलसितं भाग्यदुर्विपाकम्। अवदातं शुद्धं, (दैप् शोधने, कर्मणि क्तः) ("अवदातं तु विमले सदाते सितपीतयोः" इति हेमः)। अहो! नियतिर्विधिः, दुर्विपाका, ("दैवं दिष्टं भागधेयं भाग्यं स्त्री

प्रतिकटुकटाक्षनिरीक्षणम्, अहो ! विसदृशफलता गुरुजनाशिषाम्, अहो ! दुःस्वप्नानां दुर्निमित्तानां च फलितं, सर्वथा न कश्चिदगोचरो भवितव्यतानां, किं न सम्यगाराधिता विद्याः ? किं न यथावदाराधिता गुरवः ? नोपासिता वह्नयः ? किमधिक्षिप्ता भूदेवाः ? किं न प्रदक्षिणीकृताः सुरभयः ? किं न कृतं शरणेष्वभयम् ?" इति बहुविधं विलपन् दक्षिणेन काननं निर्गत्य नव्यनड्नलदनलिनीनिचुलपिचुलविदुलवकुलेन, प्रचुरचिरबिल्वबिल्वाटजकुटजरुद्धोपकण्ठेन, सोत्कण्ठ-

---

द्दिष्टतिर्विधि." इत्यमरः) दैवनियत्योः पर्यायतया पुनरुक्तिरियं वैचित्र्येण । कालगतिः दुःखेनातिक्रमो यस्याः । कटु क्रूरम । गुरुजनाशिषामत्यान् परित्यज्य यातोऽपि सुकृतिभोग्यान् भोगान् लभस्वेत्येवंरूपाणाम् ; स्पष्टा चेयं रीतिरर्जुनदाराणामभिमन्युविलापे महाभारते ; विसदृशफलता । दुःस्वप्नानामित्यादि । भवितव्यतानां शुभमशुभं वा नागोचरो नाविषयः, तथा च भवभूतिः,—"प्रायः शुभं च विदधात्यशुभं च जन्तोः सर्वङ्कषा भगवती भवितव्यतेव" इति । किं विद्या ज्योतिर्नीतिप्रमुखाः, न सम्यगाराधिताः ? न सम्यक् परिशीलिताः ? यदावाभ्यां दुर्मुहूर्ते प्रस्थितं नीतिविरुद्धं चात्र स्थितमिति भावः । यथावत् यथाशास्त्रम् ; इदमग्रेऽप्युभयत्रान्वेति । किं भूदेवा द्विजाः, अधिक्षिप्ताः ? तिरस्कृताः ? तदुक्तं— "शतश्चैव गतायुश्च ब्राह्मणान् द्वेष्टि भारत" इति ; तेन किं वा ममेयमवस्था ? इति भावः, ("अग्रजन्मभूदेवबाडवाः" इत्यमरः) । किं सुरभयो गावः, न प्रदक्षिणीकृताः ? अथेन्द्रसुरभ्यायत्तस्नातां सुदक्षिणां सहचरी दिलीपो मार्गस्थां धेनुमप्रदक्षिणीकृत्यैव यातस्ततः शप्तः, एवमहमपि किं गोभिः शप्तः ? इति भावः । किं शरणेषु शरणागतेषु, अभयं न कृतम् ? येन मामपि कश्चित् प्रियादानेन विरहानलात्र त्रायते इति भावः । [दक्षिणेनेत्येनबन्तम्] काननमित्यत्र ["एनपा द्वितीया" इति द्वितीया] । निर्गत्य काननोपान्तेन कतिपयदूरं गत्वा जलनिधिमपश्यदित्यन्वयः । नव्या नड्वा धमनाः, नलदान्युशीराणि, नलिन्यः पद्मिन्यः, निचुलाः हिज्जलाः, पिचुला झावुकाः, विदुलाः परिव्याधाः, वकुलाः केशरा यत्र तेन । ("नड्वस्तु धमनः", "नरकट्" इति ख्यातम् । "अभीरमस्त्रियाम् । अभयं नलदम्", "खस्" इति ख्यातम् । "नलिनीपद्मिनीमुखाः" । "अथो पिचुलझावुकौ", "झाउ" इति ख्यातम् । "द्वौ परिव्याधविदुलौ",

भृङ्गराजरसितसुन्दरसुन्दरीवनेन, विततवेत्रततिव्रातावरण-तरुणवरुणस्कन्धसमदभृङ्गरोलेन, गोलाङ्गूलभग्नगलन्मधुच्छत्र-मधुपटलरसासारसिक्ततरुतलेन, तालहिन्तालपूगपुन्नागकेसर-घनेन, घनसारमल्लिकाकेतककोविदारमन्दारवीजपूरजम्बीर-जम्बूगुल्मगहनेन, अप्रत्यूहदात्यूहकुहरितभरितनदीनल-

"बेत" इति ख्यातम्। "अथ केसरे बकुलः", "मौलसरी" इति ख्यातम्। "निचुलो हिज्जलोऽम्बुजः", "समुद्रफल" इति ख्यातम् इत्यन्ये। इति सप्तस्वप्यमरः)। प्रचुरैश्चिरबिल्वैः करञ्जैः, बिल्वैः शैलूषैः, अटजैः पर्णशबिर्मुनिच्छदैः, कुटजैः वृक्षभेदैः, वडोपकण्ठेन, ("चिरबिल्वो नक्तमालः करजश्च करञ्जके"। "मुनीनां तु पर्णशालोटजोऽस्त्रियाम्" इति द्वयोरप्यमरः। "कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि" इति विश्वप्रकाशः, "कोरया" इति भाषायाम्)। भीत्कण्ठभृङ्गराजरसितेन सुन्दरं सुन्दरीवनं यत्र तेन, ("सुन्दरी तरुभिन्नारी-भिदोः स्त्री रुचिरेऽन्यवत्"। "भृङ्गराजस्तु विज्ञेयः ओषधौ पक्षिभेदके" इति धरणिः)। विततानां वेत्रलतानां व्रातो व्यूहः, आवरणं येषां तादृशास्तरुणा नवीनाः, वरुणास्तिक्तशाकाः, तेषां स्कन्धे समदा भृङ्गरोलाः कीटाः पक्षिणो भ्रमरा वा यत्र तेन, ("वल्ली तु व्रततिर्लता"। "वरुणो वरुणः सेतुस्तिक्तशाकः" इति द्वयोरप्यमरः। "भृङ्गरोलः पक्षिभेदे कीटभेदे च षट्पदे" इति धरणिः)। गोलाङ्गूलेत्यादि।—गोलाङ्गूलो वानरः, ("गोलाङ्गूलः प्लवङ्गश्च कीशः शाखामृगः कपिः" इत्युत्पलिनी)। तालस्तृणराजः, हिन्तालो हीनोऽल्पस्तालो हिन्तालः, [पृषोदरादिः] पूगः क्रमुकः, पुन्नागो देववल्लभः, केसरो नागकेसरः, तैर्घनेन, ("तृणराजाह्वयस्तालः", "ताड़" इति ख्यातम्। "पूगः क्रमुको गुवाकः", "सुपारी" इति ख्यातम्। "पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः", गुर्जरदेशे "देमरा" इति ख्यातम्, इति त्रिष्वप्यमरः। "केसरो नागकेसरः" इति हैमः)। घनसारो वृक्षभेदः कुष्माण्डको वा, मल्लिका हंसातृणपुष्पं वा, केतकं, कोविदारो युगपत्रकः, मन्दारोऽर्कः पारिजातको वा, बीजपूरः फलपूरः, जम्बीरो मरुवकः, जम्बूः, गुल्माः स्तम्बाः, तैर्गहनेन, ("कुष्माण्डकः पुष्पफलो घनसारः" इति शब्दार्णवः। "घनसारस्तु कर्पूरे दक्षिणावर्तपारदे" इति हेमः। "मल्लिको हंसभेदे स्यात् तृणपुष्पे तु मल्लिका" इति रुद्रः। "कोविदारे चमरिकः कुद्दालो युगपत्रकः", "कचनार" इति ख्यातम्। "गन्धर्विकीरकाः मन्दारश्च", "मदार" इति ख्यातम्। "मन्दारः पारिजातकः", "फराड़न्" इति ख्यातम्।

निकुञ्जेन, पुञ्जिताकुण्ठकण्ठकलकण्ठाध्यासितोद्दामसहकारपल्लवेन, चपलकुलायकुक्कुटकुटुम्बसंवाहितोत्कटविटपेन, कोरकनिकुरम्बरोमाञ्चितकुरबकराजिना, रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशा, प्रविकसितकेसररजोविसरधूसरिमभरेण, परागपिञ्जरमञ्जरीमुह्यमानमधुकरमण्डलशिञ्जितजनितजनमुदा, मदजलमेचकितमुचुकुन्दस्कन्धकाण्डकथ्यमाननिःशङ्ककरिकटविकटकण्डूतिना, कतिपयदिवसप्रसूतकुक्कुटीकुटीरीकृतकुटजकोटरेण, चटकसंश्लाघ्यमानचटुलवाचाटचाटकैरक्रियमाणचाटुना, सहचरीचारणचुञ्चुचतुरचकोरचञ्चुना, शैलेयसुकुमारतरशिलातलसुखशयितशशकशिशुना, शेफालिकाशिफाविवरविस्रब्धविवर्तमानगौधेरराशिना, निरातङ्करङ्कुणा, निराकुलनकुलकुल-

"मन्दारः पारिजातकः। पञ्चैते देवतरवः" इति देवतरवर्गः। "फलपूरो बीजपूरः", "बिजौरा" इति ख्यातम्। "मरुबकः प्रस्थपुष्पः फणिज्जकः। जम्बीरोऽपि", "मरुआ" इति ख्यातम्। "वपकाण्डे स्तबगुल्मो" इति षट्स्वमरः)। प्रत्यूह इत्यादि।—प्रत्यूहो विघ्नः। पुञ्जीकृतेनाकुण्ठकण्ठः कलकण्ठः कोकिलः, तेनाध्यासिता उद्दामसहकारपल्लवा यत्र तेन। चपलेन कुलायकुक्कुटकुटुम्बेन संवाहितो मर्दितः, उत्कटविटपो यत्र तेन। कोरकेत्यादि।—निकुरम्बः समूहः, कुरबको रक्तमहासहा, "लाल कटसैरैया" इति भाषायाम्। विसरः समूहः। मुचकुन्दो वृक्षभेदः, ("मुचकुन्दो वृक्षभेदे मुनिदैत्यविशेषयोः" इति विश्वः)। कटः गण्डस्थलम्। कतिपयदिनप्रसूतकुक्कुट्या कुटीरीकृतं कुटजकोटरं निष्कुहो यत्र तेन। चटकः कलविङ्कः, ("चटकः कलविङ्कः स्यात्"। "पुंवत्स्ये चाटकैरः" इति द्वयोरप्यमरः)। [चटकाया ऐरक्] वाचाटो बहुभाषी, ["वालजाटचौ बहुभाषिणि" इत्याटच्]। सहचरीणां सञ्चारणेषु चुञ्चुभिर्वित्तैः, चतुरचकोरैः पक्षिभिः, चुञ्चुना वित्तेन, ["तेन वित्तश्चुञ्चुप्चणपौ"]। शैलेयं ("कालानुसार्यवृद्धाश्म-पुष्पशीतशिवानि तु। शैलेयम्" इत्यमरः)। शेफालिका सुवहा, ("शेफालिका तु सुवहा" इत्यमरः, "निवारी" इति ख्यातम्। "शिफा जटायां सरिति मांसिकायां च मातरि" इति विश्वप्रकाशः) गौधेरः ["गोधाया ढ्रक्" इति ढ्रगन्तः] ("अथो गौधेरगौधार-गौधेया गोधिकात्मजे" इत्यमरः, "गोह" इति ख्यातम्)। राशिः समूहः, ("आन्निकायः पुञ्जराशी"

केलिना, कलकोकिलकुलकवलितसहकारकलिकोद्गमेन, सहकारारामरोमन्थायमानचमरीयूथेन, अश्रान्तहारिसलीलगिरिनितम्ब-निर्झर-निनाद-निद्राण-मन्दायमान-करिकुल-कर्णताल-दुन्दुभिना, समासन्नकिन्नरीगीतरवरज्यमानरुरुविसरेण, घनहरितहरिद्राद्रवरज्यमानवराहपोतपोत्रपालिना, गुञ्जापुञ्ज-गुञ्जज्जालकजालेन, दंशनकुपितकपिकपोतनखकोटिपाटित-पाटलकीटपुटसङ्कुलेन, कुलिशशिखरखरनखरप्रचयप्रचण्ड-चपेटपाटित-मत्तमातङ्गकुम्भस्थल-रुधिरच्छटाच्छुरितचारुकेसर-भारभासुरकेसरिकदम्बेन, महासागरकल्लोलान्तेन कतिपय-दूरं गत्वाऽतिचपलवीचिप्रचयतया ताण्डवोड्डमरदोर्दण्डखण्ड-परशुविडम्बनापण्डितं, वारुणीविजयपताकाभिरिव, शेषकुल-निर्मोकमञ्जुमञ्जरीभिरिव, शशाङ्कपरिशेषपरमाणुसन्ततिभि-

इत्यमरः) रुरुर्मृगः, ("रुरुर्महारोहिषः" इत्यमरः)। रोमन्थायमानाः चर्वितस्याकृष्य पुनश्चर्वणं रोमन्थः, ["कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" इति क्यङ्। शिष्टात्मनेपदम्] चमरी मृगभेदः। अश्रान्तहारि सलीलं गिरिनितम्बानां निर्झरनिनादेन निद्राणं करिकुलं तस्य मन्दायमानः कर्णतालो दुन्दुभिर्यत्र तेन। रुरुर्मृगभेदः। घना हरिता श्यामा, न तु शुष्का, या हरिद्रा तद्द्रवैः रज्यमाना वराहपोतानां पोत्रपालिर्मुखपर्यायश्रेणी यत्र तेन, ("पोत्रं वक्त्रं मुखाग्रञ्च शूकरस्य हलस्य च" इति विश्वप्रकाशः। "पालिः पङ्क्तिप्रदेशयोः" इति विश्वः)। गुञ्जानां काकचिञ्चीनां, पुञ्जे गुञ्जज्जालकजालं यत्र तेन, ("गुञ्जाऽपि पटहे प्रोक्ता काकचिञ्चां कलध्वनौ" इति विश्वप्रकाशः। "जालकः कलिको पोङ्गः कोरकोऽपि च जालकः" इत्युत्पलिनी। "पोङ्गे कोरकिकायां च जालकः परिकीर्तितः" इति हारावली)। दंशनेत्यादि।—पाटलकीटः श्वेतरक्तः कीटविशेषः। कुलिशशिखरं वज्राग्रम्; केसरभारः स्कन्धकेशसमूहः; भासुरं दीप्तिमत्, ["भञ्जभास—" इति घुरच्]; कदम्बकं समूहः। अतिचपलवीचिप्रचयतया अतिचञ्चलतरङ्गसमूहतया, ताण्डवेषूड्डमरौ दोर्दण्डौ भुजदण्डौ यस्य ताण्डवः, खण्डपरशुः शिवः, तद्विडम्बनापण्डित-तद्भुजस्वरूपपण्डितम्। ("भूतेशः खण्डपरशुः" इत्यमरः)। वारुणी पश्चिमदिक्, विजयपताकाभिरिव, जलधीतत्वादिति भावः। शेष इत्यादि।—

रिव, लक्ष्मीलीलाऽऽतर्पणधाराभिरिव, जलदेवताचन्दनविच्छित्तिभिरिव, फेनराजिभिरुपात्तरामणीयकम्, अपरमिव गगनमवनिमवतीर्णम्, अर्णवच्छलादुच्छलच्छीकरकणनिकरैर्नभश्चरान् मुक्ताफलैरिव विलोभयन्तम्, अभयाभ्यर्थनागतानेकसपक्षक्षितिधरभरितकुक्षिभागं, सगरसुतशताखातम्, उत्खातपारिजातकम्, अभिजातमणिरत्नाकरं, करिमकरकुलसङ्कुलं, शकुलकुलकवलनाभिलाषचञ्चरन्नक्रचक्रम्, अस्तिमिततिमिङ्गिलकुलं, कूलकन्दलीवलयाचल-विलुलितवेला-वल्लितलवली-लवङ्गमातुलुङ्गगुल्मम्, ऊर्मिमारुत-प्रसारिततरलतोत्ताल-ताल-हिन्ताल-तालीतरलित-जलमानुषमिथुनमृदित-सलिलपुलिन-वालशैवालं, प्रवालाङ्कुरकोटिपाटितमुखखिन्नशङ्खनखशिखालिखित-तटलेखं, खगेश्वरगात्रपत्ररथपटलकलितसलिलम्, अद्याप्यनिमुक्तमन्दर-मथनसंस्कारमिवावर्त्तभ्रान्तिभिः, सापस्मारमिव फेनैः, ससुरामोदमिव वेलावकुलगन्धैः, सरोषमिव गर्जितैः, सखेदमिव निश्वसितैः, सभ्रुकुटीभङ्गमिव तरङ्गैः, सालानस्तम्भमिव राम-

निर्मोकः ("समौ कञ्चुकनिर्मोकौ" इत्यमरः)। सन्ततिः समूहः। लक्ष्म्याः लीलार्थं क्रीडार्थं, यदातर्पणम् "आलिपन" इति भाषायां, तद्धाराभिरिव। विच्छित्तिश्चमत्कारः। रामणीयकं रमणीयता। अपरमित्यादि। सगरो राजा, खातं [खनु अवदारणे क्त, "जनसन—" इत्यात्वम्]। पारिजातो देववृक्षः। अभिजातानां शुद्धानां, मणीनां रत्नानां चाकरः। करी जलचरो गजः, मकरश्च, तयोः कुलेन, करिरूपमकरकुलेन वा, सङ्कुलम्। शकुलो मत्स्यभेदः, नक्रः कुम्भीरः। अस्तिमितं अचलं, तिमिं मत्स्यं, गिलतीति तिमिङ्गिलो महामत्स्यः, ["मूलविभुजादित्वात्" कः, "अचि विभाषा" इति लत्वं, "गिलेऽगिलस्य" इति मुम्] तस्य कुलं यत्र तम्। कूलेत्यादि।—लवली लताभेद इति केचित्, फलमित्यपरे, "हरफारेवड़ी" इति प्रसिद्धं, मातुलुङ्गको रुचकः, ("रुचको मातुलुङ्गकः" इत्यमरः)। प्रवालो विद्रुमः, पाटितं विदारितं, शङ्खनखाः क्षुद्रशङ्खाः, ("क्षुद्रशङ्खाः शङ्खनखाः" इत्यमरः)। खगेश्वरो गरुड़ः। अपस्मारो रोगः। सुरा मद्यम्। ("[illegible]

सेतुना, कुम्भीनसीकुक्षिमिव लवणोत्पत्तिस्थानं, व्याकरणमिव विततस्त्रीनदीकल्पबहुलं, राजकुलमिव दृश्यमानमहापात्रं, हस्तिबन्धमिव वारिगतानेकनागमुच्यमानफूत्कारं, विश्वामित्रपुत्रवर्गमिवाम्भोजचामरमत्स्योपशोभितं, सत्पुरुषमिव गोत्राश्रयं, साधुमिवाच्युतस्थितिरमणीयं, सुनृपमिव सज्जनक्रमकरं, कृतमन्युमिव करतोयाप्लुतमुखं, विरहिणमिव चन्दनोदकसिक्तं, विलासिनमिव नर्मदानुगतम्, उद्धृतकालकूटमपि प्रकटितविषराशिम्, अतिवृद्धमपि सुन्दरीपरिवृतकण्ठं, सुरोत्पत्तिस्थानमप्यसुराधिष्ठितं जलनिधिमपश्यत् ।

---

बन्धस्तम्भः" इत्यमरः)। कुम्भीनसी राक्षसी, लवणस्सुतः। व्याकरणमिव विततानि स्त्री स्त्र्यधिकारकार्याणि, नदीसंज्ञा तत्कार्याणि, कल्पसंज्ञाकार्याणि, बहुलं अथवा बहुलमित्यादि; पक्षे—विततानां स्त्रीनदीनां पत्नीभूतानां नदीनां, कल्पैस्तरङ्गाधरपानरूपैः, बहुलम्। राजकुलमिव महापात्रं महामात्यः; पक्षे—पात्रं तीरद्वयान्तरम्। [ बन्ध बन्धने, अधिकरणे घञ् ] हस्तिनो बध्यन्तेऽत्र हस्तिबन्धः गजबन्धनस्थानमिव, वारिगतैर्बन्धनरज्जुगतैः, तद्बद्धैः, अनेकनागैर्गजैः, मुच्यमानफूत्कारं, ( "वारी घटी वारि विख्यातं वारि बन्धनरज्जुषु" इति धरणिः ) [ "वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्" इतीञ् ] पक्षे—वारि जलं, नागाः सर्पाः, ( अमरस्तु—"वारी तु गजबन्धनी" इति ङीषन्तं बन्धनस्थानवाचिनमाह, तन्मते तु नैतदुपपद्यते, कोषान्तरेष्वेवमेव। विश्वामित्रपुत्रवर्गमिव अम्भोजैः अमलैः, चामरैः वालव्यजनैः, मत्स्यैः उपशोभितम्; पक्षे—अम्भोजचामरं शैवालं, ( "शैवालं शैवालाम्भोज चामरं जलनीलिका" इत्युत्पलिनी )। सत्पुरुषमिव गोत्रं वंशः; पक्षे—पर्वतः। साधुमिवाच्युता अपतिता, स्थितिर्मर्यादा, तया रमणीयम्; पक्षे—अच्युतो विष्णुः, स्थित्या रमणीयम्। सुनृपमिव सज्जनानां क्रमकरं व्यवहारकरम्; पक्षे—सज्जा नक्रा मकरा यत्र तम्। कृतमन्युमिव कृतकोपमिव, करतोयेन पाणिस्थजलेन, आप्लुतं क्षालितं, मुखम्; पक्षे—करतोया नदी, ( "करतोया सदानीरा" इत्यमरः )। विरहिणमिव चन्दनस्योदकेन सिक्तम्; पक्षे—चन्दना नदीविशेषः, चन्दनसम्बन्धि जलं वा। विलासिनमिव नर्म क्रीडा, तां ददाति ताभिरनुगतम्; पक्षे—नर्मदा नदी, ( "नर्मदा सोमोद्भवा" इत्यमरः )। उद्धृतः कालकूटी

अचिन्तयच्च—"अहो! मे कृतापकारेणापि विधिनोपकृतिरेव कृता यदयं लोचनगोचरतां नीतः समुद्रः; तदत्र देहमुत्सृज्य प्रियाविरहाग्निं निर्वापयामि। यद्यप्यनातुरस्य देहत्यागो न विहितः, तथाऽपि कार्य्यः, न खलु सर्वः कार्य्यमकार्य्यं वा करोति इति। अस्मिन् संसारे केन किं वा न कृतम्? तथा हि, गुरुदारग्रहणं द्विजराजोऽकरोत्। पुरूरवा ब्राह्मणधनतृष्णया विननाश। नहुषः परकलत्रदोहदी महाभुजङ्ग आसीत्। ययातिर्विहितब्राह्मणीपाणिग्रहणः

---

हालाहलो यस्मात् तमपि, प्रकटितो विषस्य क्ष्वेडस्य, राशिर्येन तमिति विरोधः; विषं जलमिति परिहारः। अतिहृष्टमतिशय्यविरमपि, सुन्दरीभिः स्त्रीभिः, परिहृतकण्ठमिति विरोधः; अतिहृष्टं महीयांसं, सुन्दरी वृक्षभेदः, कण्ठः समीपदेशः इति परिहारः, ("कण्ठो गले गलध्वाने समीपेऽपि प्रकीर्त्तितः" इति विश्वः)। सुराश्चन्द्रादयो मद्यं वा, तदुत्पत्तिस्थानमपि ताभ्यामनधिष्ठितमिति विरोधः; यद्वा—सुरस्य ब्रह्मणः, उत्पत्तिर्यस्मात् सुरोत्पत्तिर्विष्णुः, तस्य स्थानमपि, असुरैरधिष्ठितमिति परिहारः।

अचिन्तयदित्यादि।—यत् यतः, यत्सन्निधे राघवेणारण्यवियुक्ता कान्ता विप्रा, सोऽयं लोचनगोचरतां नीतः। तदत्र देहमुत्सृज्य शरीरत्यागं कृत्वा, तत्कृतकर्माचरणसामर्थ्यादिति भावः, प्रियाविरहाग्निं निर्वापयामि तेनाथ कान्ताविरहाग्निर्यथाग्नौ निर्वापितः, अहं तु शरीरमुक्तेरित्यर्थः। "एति जीवन्तमानन्दो नरं वर्षशतादपि" इति प्राचीनगाथया आत्मत्यागनिषेधमाह. यद्यपीत्यादि।—आतुरस्य तु मरणं "दुश्चिकित्स्यैर्महारोगैः पीडितस्तु महानपि। प्रविशेज्ज्वलनं दीप्तं कुर्य्यादनशनादिकम्॥" इत्यादि स्मृत्युक्तमेव। "अवश्यभाविनो भावा भवन्ति महतामपि। नग्नत्वं नीलकण्ठस्य महाऽहिशयनं हरेः॥" "अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः" इत्यादिना भवितव्यताप्राबल्यं मत्वाह आह, तथाऽपीति।—अन्यायमपि करोतीति भावः। अस्मिन्निति।—किमकार्य्यं न कृतमित्यर्थः। द्विजराजश्चन्द्रः, गुरुदारग्रहणं बृहस्पतिभार्य्यायास्ताराया ग्रहणं, तया सह सुरतं, तत्र बुध उत्पन्न इत्यादिपर्वणि कथा; पक्षे—द्विजराजो ब्राह्मणश्रेष्ठः, श्रुतिस्मृत्याद्यध्ययनसम्पन्नः, गुरुदारग्रहणं गुर्वङ्गनागमनम्। पुरूरवा राजा, वयःशेषे ब्रह्मस्वमग्रहीत्, तत एव नष्ट इत्यपि भारते। नहुषो राजा, परकलत्रदोहदीन्द्राण्यां साभिलाषी, महाभुजङ्गः सर्पः, आसीत्, ("कामुको दोहदो मतः" इति रत्नकोषः) तदवस्-

पपात। सुद्युम्नः स्त्रीमय इवाभवत्। सोमकस्य प्रख्याता जन्तुवधनिर्घृणता। पुरुकुत्सः कुत्सित आसीत्। कुवलयाश्वोऽश्वतरकन्यामपि जहार। नृगः कृकलासतामगमत्। नलं कलिरभिभूतवान्। संवरणो मित्रदुहितरि विक्लवतामगात्।

---

ऋषिदूषिते मघोनि नहुष इन्द्रपदे स्थितस्तत इन्द्राण्यां साभिलाषोऽभूत्; "यद्यपूर्व-वाहनारूढो मां समयेऽभ्यागमिष्यसि तदा स्वीक्रियते मया" इत्यभिहितो महर्षीन् याने नियुज्य "सर्प सर्प" इति त्वरमाणोऽगस्त्येन "सर्पो भव" इति शप्तः इति हरिवंशे; ब्रह्महत्या कामान्धतया महर्षिपीडनं चोन्मनेन। ययातिः राजा, कृतब्राह्मणीपाणिग्रहणः कृतदेवयानीपाणिग्रहणः, पपात, तारुण्यादित्यर्थः; ययातिर्भृगुसुताया देवयान्याः परिचारिकायां शर्मिष्ठायामत्यासक्तो देवयान्या भार्गवाय निवेदितस्तेन शप्तः "जरया भव" इति; पतिताभुक्तत्वेन वयोऽन्तरप्राप्तिर्ध्वनिता। सोमकस्यैतदभिधानस्य, जन्तोस्तन्नाम्नः पुत्रस्य, वधेन निर्घृणता; पक्षे—जन्तवः शरीरिणः; सोमकस्य शतस्त्रीष्वेकस्यां जन्तुसंज्ञः पुत्र उत्पन्नः, स कदाचित् पिपीलिकया दष्टोऽरुदत्, ततः सर्वास्तन्मातरोऽरुदन्, ततोऽन्तःपुरे महानाक्रन्द आसीत्, तत् श्रुत्वा राज्ञा पुरोहितः पृष्टः "सन्तु मे बहवः पुत्राः कथम्?" इति तेन जन्तुं हत्वा हुत्वा तद्धूमाघ्राणात् सर्वाः सगर्भाः संजातास्ततः शतं पुत्रास्तस्याभवन्निति भारते, ("जन्तुजन्युशरीरिणः" इत्यमरः) एतेन मयो महापातकिनो वर्णितः। कुवलयाश्वो राजा अश्वतरकन्याम् अश्वतराख्यनागकन्यामपि, जहार, कुवलयाश्वो भार्यायां मदालसायां प्रमीतायामत्यन्तविक्लवः तन्मित्राभ्यामश्वतरपुत्राभ्यां तद्वृत्तान्तः पित्रे आख्यातः, पुत्रनिबन्धान्मायानिर्मितां मदालसां तस्मायर्पयत् सः। न भवसात् कृतः कोऽपि विघ्नः केनापि भूतले। आ-ब्रह्मस्तम्बेरित्येतद्विमृश्य अरमोहितः॥ मनुजो नागकन्यामप्याजहार मदालसाम्। कामान्धता प्रत्ययितुमिदमाह दयात्मनः॥ अज्ञानादपि सञ्जातं पातकं फलति ध्रुवम्। इति मदर्थय-श्राद्ध नृगस्य कृकलासताम्॥ नृगो राजा, कृकलासतां सरटत्वम्, अगमत्, ("सरटः कृकलासः स्यात्" इत्यमरः) "नृगेण पुष्करे तीर्थे गा द्विजेभ्यः कृताः पुरा। ब्राह्मणाहृतस्यैका कपिला मिश्रिताऽभवत्॥ अपराधादतस्तेन शप्तः सरटतामगात्॥" नलं राजानं, कलिश्चतुर्थयुगः, अभिभूतवान्; कालेन कलिना सोऽपि पुण्यश्लोकोऽतिपीडितः। इति संक्षेपसूचे नलाख्यानं पुरातनम्॥ संवरणो मित्रदुहितरं प्रति सूर्यसुतां प्रति; पक्षे—मित्रस्य सुहृदः, दुहितरं, सुताम्।

दशरथ इष्टरामोन्मादेन मृत्युमवाप। कार्त्तवीर्य्यो गोब्राह्मण-पीड़या प्रलयमयासीत्। युधिष्ठिरः समरशिरसि सत्यमसृजत्। शान्तनुरतिव्यसनाद्विपिने विललाप; इत्थं नास्त्यकलङ्कः कोऽपि, तदहमपि देहं त्यजामि"।

इति विचिन्त्य कुररखरनखरशिखरखण्डितपृथुरोमविलम्, अविरलशकुलकुलशल्कजलनकुलाचारं, क्रोष्टुकुलोत्सृष्टविकट-कर्कटकर्परपरम्परापरिगतोपान्तम्, अतितरलतरजलरयलुलित-चटुलशफरकुलकवलनकृतमतिनिभृतबकशकुनि-निवहधवलित-परिसरम्, अतिचपलजलकपिकुलविहरणालुलितसलिलकण-निकरजनित-पवनरयपरिमिलितशिशिरतरम्, अनुदिवस-निपतदतितरुणवनमहिषगवलशिखरोल्लिखितविषमतटम्, अन-

दशरथ इति।—मृगयायां हतस्य तपस्विनः पित्रा "यथा पुत्रवियोगाद्दावयोर्मृतिरेवं पुत्रशोकान्मृतिस्तेऽस्तु" इति शापाद्रामवियोगेन मृतिः; मृगयासक्तिव्यसनेन तपस्वि-वधोऽपि ध्वनितः। कार्त्तवीर्य्यः सहस्रबाहुः, गोजमदग्निगाः, ब्राह्मणस्य जमदग्नेः, पीड़या मृतः, अनेनैवापराधेन रामेण निहतोऽर्जुनः। युधिष्ठिर इति। शान्तनुरिति। शोकान्मृतिर्देहोत्सर्गो वने च परिदेवनम्। कन्दर्पकेतुः स्वकृतानुपदेशकमुक्तवान् ॥ तदहमपि देहं त्यजामि।

इति विचिन्त्य पुलिनमासनादित्यन्वयः। कुरराः उत्क्रोशाः, तेषां खरनखर-शिखरैः खण्डितपृथुरोमविलं झषविलम्। ("उत्क्रोशकुररौ समौ"। "पृथुरोमा झषो मत्स्यः" इत्यमरः)। अविरलानि शकुलकुलस्य मत्स्यविशेषकुलस्य, शल्कानि यत्र तादृशाः, जलनकुलानामुच्चारा यत्र तत् ("शल्कं शकलवल्कले" इति "उच्चारावस्करौ शमलं शकृत्" इति चामरः)। क्रोष्टुकुलोत्सृष्टाः शृगालकुलत्यक्ताः, विकटाः कर्कटानां कर्परपरम्पराः कपालपरम्पराः, ताभिः परिगतोपान्तं व्याप्त-प्रान्तम्। ("स्यात् कर्परः कपालोऽस्त्री" इत्यमरः)। अतितरलजलस्य रये वेगे, लुलितं चटुलं यत् शफरकुलं तत्कवलने कृतमतिरत एव निभृतो मन्दः, चेष्टाशून्यः, बकशकुनिनिवहस्तेन धवलितपरिसरम्। अतिचपलेति।—("शिशुमारो जलकपि-स्तद्भेदो चाभिपुच्छकः" इति हारावली)। अनुदिवसं निपतन्तोऽतितरुणा वन-महिषास्तेषां गवलशिखरैः शृङ्गाग्रैः, उल्लिखितानि विदारितानि, विषमतटम्।

वरत-चरदसितमुखचरण-विहग-निवह-मधुर-निनद-मुखरितम्, अहिमकरचरण-रुचिर-जलमनुज-मथन-मृदित-जलधरणितलम्, अतिबहल-मदजलशबल-करटतट-करिवरशत-निपतितमधुकर-विरुतिरतिकरम्, अतिजवन-पवनविधुतजलधिजल-पटल-विनटननिपतितमणिगणपरिगतपरिसरं, जलनिधिभुजगनिर्मुक्त-निर्मोकपट्टमिव, दर्पणमिव वसुन्धरायाः, स्फटिककुट्टिममिव वरुणस्य, विपुलं पुलिनजलमाससाद। ततः कृतस्नानादि-र्जलमवतरितुमारेभे शरीरत्यागाय।

अथ सानुग्रहेषु ग्राहेषु, निर्मत्सरेषु मत्स्येषु, अक्षुद्रेषु क्षुद्रेषु, वत्सलेषु कच्छपेषु, अक्रूरेषु नक्रेषु, अभयङ्करेषु मकरेषु, अमारेषु शिशुमारेष्वाकाशसरस्वती समुदचरत्—"आर्य्य कन्दर्प-केतो! पुनरपि तत्र प्रियया सह सङ्गमो भविष्यत्यचिरेण, तत् विरम मरणाध्यवसायात्" इति। तदुपश्रुत्य मरणाद्विरराम। पुनः प्रियया समागमेच्छया शरीरस्थितिहेतुमाहारं चिकीर्षु-

("गवलं माहिषं शृङ्गम्" इत्यमरः) अत्र गवलप्रयोगे यत्कृष्णत्वं तदन्यत्रोक्तम्। अनवरतं चरन्तोऽसितमुखचरणा धार्त्तराष्ट्राः, तेषां निवहस्तस्य मधुरनिनादैर्मुखरितम्। ("राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाख्यास्ते धार्त्तराष्ट्राः सितेतरैः॥" इत्यमरः)। अहिमकरः सूर्य्यः, तस्य चरणैरिव किरणैरिव, रुचिरं भासुरं, जलमनुजानां जलमनुष्याणां, मथनेन मृदितं जलगतं जलान्तर्गतं, धरणितलं यत्र; यद्वा—अहिः सर्पः, मकरो जलजन्तुभेदः, तयोश्चरणेन भ्रमणेन, रुचिरं पोताधानादिरहितं, जलमनुजमथनेन मृदितं जलधरणितलं यत्र। अतिबहलमदजलशबलः करटो गण्डो येषां तादृशकरिवरशतेषु निपतितमधुकराणां विरुतिभिः शब्दैः, रतिकरम्। ("काकेभगण्डौ करटौ" इत्यमरः) कट इत्यपि पाठोऽर्थस्त्वभिन्नः। अतिजवनोऽतिवेगवान्, पवनस्तेन विधुतजलधिजलपटलान्निपतितो मणिगणो यत्र तादृशः, परिसरो यस्य तम्। ("जवनस्तु जवाधिके" इत्यमरः)। जलनिधीत्यादि। तत इत्यादि।

आकाशसरस्वती आकाशवाक्, समुदचरदुत्थिता, [अकर्मकत्वात् "उदश्चरः स-कर्मकादात्मनेपदं न]। तदुपश्रुत्य, आर्य्येत्यादि।

महासागरकल्लोलोपान्तभुवं जगाम। अथ तत इतः परिभ्रमन् फलमूलादिना वने वर्त्तमानः कियन्तं कालं निनाय कन्दर्पकेतुः।

एकदा कतिपयमासापगमे काकलीगायन इव मद्गु-निम्नगानदः, सन्ध्यासमय इव नर्त्तितनीलकण्ठः, कुमारमयूर इव सम्मूढशरजन्मा, महातपस्वीव प्रशमितरजःप्रसरः, तापस इव धृतजलदकरकः, प्रलयकाल इव दर्शितानेकतरणिविभ्रमः, निरुपद्रुतकाननोद्देश इव घनोत्सुकितसारङ्गः, रेवतीकरपल्लव इव हलिधृतिकरः आजगाम वर्षासमयः। निर्भिन्नमेघ-नीलोत्पलकानने क्रीडासरसीव, नभसि स्मरस्य रत्ननौकेव, जलदलक्ष्मीमातङ्गकन्यानर्त्तनरज्जुरिव, नभःसौधतोरणमालिकेव,

एकदा वर्षासमय आजगामेति सम्बन्धः। काकलीगायनः कलमन्द्रगायन इव। मद्गु निम्नं नीचं, गभीरं वा, गानं ददाति तादृशः; पक्षे—मद्गवः परिपूर्ण-प्रवाहाः, निम्नगा नद्यः, नदाश्च यत्र। ("काकली तु कले सूक्ष्मे"। "निम्नं गभीरं गम्भीरम्" इति द्वयोरप्यमरः)। नीलकण्ठः शिवः; पक्षे—मयूरः। कुमारमयूर इव सम्यग्गूढः शरजन्मा षडाननो येन; पक्षे—सम्मूढानां पुञ्जीभूतानां, शराणां जन्म यत्र। ("सम्मूढः पुञ्जिते भुग्ने सद्योजाते भृशेऽपि च" इति विश्वः)। रजो धूलिः; पक्षे—द्वितीयो गुणः। तापस इव तपस्वीव, धृतो जलदो जलदः, करकः कमण्डलुर्येन; पक्षे—धृता जलदाः करका वर्षोपला येन। ("करका मेघपाषाणे करका च कमण्डलौ। दाडिमेऽपि च करकं करौ च करकः स्मृतः॥" इति विश्वः) वर्षासु करकावर्षणं कविसम्प्रदायः। प्रलयकाल इव दर्शितोऽनेक-तरणीनां सूर्याणां, विभ्रमो येन; पक्षे—तरणीनां। ("स्त्रियां नौस्तरणिस्तरिः" इत्यमरः) विभ्रमो भ्रमणम्। निरुपद्रुतकाननोद्देश इव घनमत्यन्तं, घना वात्सुकिताः सारङ्गा हरिणा यत्र; पक्षे—घनेन मेघेन, उत्सुकिताः सारङ्गाश्चातका यत्र। ("चातके हरिणे पुंसि सारङ्गः शबले त्रिषु" इत्यमरः)। रेवतीकरपल्लव इव हलिनो बलरामस्य, धृतिकरो धैर्याधायकः; पक्षे—हलिनां कर्षकाणां, धृतिकरः प्रीतिकरः। इन्द्रधनुर्लता राजतेति सम्बन्धः। निर्भिन्ने विकसिते, मेघे एव नीलोत्पल-कानने क्रीडासरसीव। नभसि कुसुमशरस्य रत्ननौकेव रत्नघटितनौकेव। जलदलक्ष्मीव

वा—१२

प्रवसता निदाघेन दिवः पयोधरे दत्ता स्मरणाय नखक्षता-वलीव, गगनलक्ष्मीरत्नरशनामालेव, नभोमन्दारकसुन्दर-कलिकामालेव, रतिनखमार्जनरत्नशलाकेव, रत्नशुक्तिरिव कुसुमकेतोरिन्द्रधनुर्लता रराज। अतिवेगनिपीतजलधिजल-शङ्कमानामिव बलाकाच्छलादुद्वमन्नदृश्यत जलदः। पीतहरितासु केदारिकाकोष्ठिकासु समुत्पन्नैर्जतुशबलैरिव दर्दुरै-र्नयद्यूतैरिव चिक्रीड वर्षाकालः। रविदीपकज्जलनिचयनिभे निकषोपले इव, मेघसमयसुवर्णकारनिकषितसुवर्णलेखेव तड़िद-शोभत। विरहिणां हृदयं विदारयितुं करपत्रमिव कुसुमा-

---

मातङ्गश्च चण्डालभेदस्य, कन्या सैव नर्त्तकी तस्या रज्जुः समाकर्षणरज्जुः, चण्डालकन्या रज्जुमवलम्ब्य नृत्यति। ("चण्डालप्लवमातङ्ग दिवाकीर्त्तिजनङ्गमाः" इत्यमरः)। नभ इति। प्रवसता निदाघेनोष्णोपगमेन, स्मरणाय दिवो द्योः, पयोधरे स्तने मेघे च, दत्तानि नखक्षतानीव। "चिरोत्पन्नप्रवासेन प्रीतिर्गच्छेत् पराभवम्। रागायतन-संस्मारि यदि न स्यान्नखक्षतम्॥" इति कामतन्त्रम्। ("निदाघ उष्णोपगमः"। "द्योदिवौ द्वे स्त्रियामभ्रम्" इति द्वयोरप्यमरः)। गगनलक्ष्म्या रत्नरशनेव काञ्चीव। ("स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा" इत्यमरः)। नभोमन्दारस्य देवतरु-विशेषस्य, सुन्दरकलिकामालेव। रतिरित्यादि। अतिवेग इति अतिपाने हेतुः; बलाकाच्छलाद्विसकण्ठिकामिषात्, ऊर्द्धमण्डलदेशेऽदृश्यत। ("बलाका विस-कण्ठिका" इत्यमरः) बकजातिविशेषः। कैतवापह्नुतिरलङ्कारः,—"कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते पदैः" इति लक्षणात्। कृषाक्षेत्रेषु, क्षुद्रवापीविन्यासैः, काति-वयमहावापीर्हंशविन्यासार्थकम्; क्वचित् क्षेत्रासिति पाठः, तत्र जलसंस्कृतालिन्दैः, केदारिका एव कोष्ठिकास्तासु, ["केदारकोष्ठाभ्यामन्यत्वे" कानि रूपम्] "कियारी" इति भाषायां, वस्त्रादिनिर्मितं क्रीड़ासाधनं स्थानविशेषः, "कोठा" इति च, पीतहरितैःसवर्णैः, जतुशबलैःलाक्षारक्तैः, नयो युक्तगोलः, अक्षपाशैर्द्यूतैश्चतुरङ्गैः, चतुरङ्गसाधनेषु लक्षणा नयद्यूतसाधनभूतैर्हस्त्यश्वादिभिरिव समुत्पतद्भिः, दर्दुरैर्भेकैः, वर्षाकालश्चिक्रीड़। [जातुषैरिति पाठे "विकारे त्रपुजतुनोः षुक्" इत्यण् षुगागमश्च]। रविरिति।—निकषोपलमावपः, ("शाणस्तु निकषोपलम्") "कसौटी" इति भाषायाम्। विरहिणामिति।—करपत्रं क्रकचं, ("क्रकचोऽस्त्री

कान्दलुब्धपोत्रिपोत्रोत्खाततटतड़ागे, चकितचातके, सञ्चरन्मत्स्य-पुत्रिकापांत्रपटलमधुरध्वनिविहितमुदि, कदर्थितकदम्बे, कम्बु-द्विषि, प्रसूतबिसप्रसूने, विरलवारिदे, तारतरतारके, चारु-चन्द्रमसि, स्वादुतरसरःसलिले, स्फुरितशफरचक्रकवलन-निभृतबकानीके, मूकमण्डूकमण्डले, सङ्कोचितकञ्चुकिनि, काञ्चन-च्छेदगौरशालिशालिनि, क्रोशत्क्रोशे, सुरभिगन्धिसौगन्धिक-गन्धहारिहरिणाश्वे, कुमुदामोदिनि, कौमुदीकृतमुदि, निर्बर्हं-बर्हिणि, निःकूजत्कोयष्टिके, हृतधार्त्तराष्ट्रे, हृष्टकलमगोपिका-गीतसुखितमृगयूथे, कथीकृतयूथिके, म्लायमानमालतीमुकुले, बन्धूकबान्धवे, सञ्जातसुजानके, विमुद्रितसौत्रामधनुषि, स्मेर-काश्मीररजःपुञ्जपिञ्जरितदशदिशि, विकस्वरकमले शरत्समया-

---

पलिनी)। मधुरं मधुरध्वनिवत् यत्र। ("खड्गपत्री मधुरध्वनिर्मधुरस्वनः" इत्युत्पलिनी)। सुरसं सारसानां रसितं सारसत्वं यत्र तादृक्, कासारः सरो यत्र तत्र। ("कासारः सरसी सरः" इत्यमरः)। शोभनकन्देकान्दलुब्धानां पोत्रिणां वराहाणां, पोत्रैर्घोणाभिः, उत्खाततटास्तडागा यत्र तस्मिन्। ("कोलः पोत्री किरिः किटिः" इत्यमरः)। चकितास्त्रस्ताः संशयिता वा, चातका यत्र। [चक तृप्तौ प्रतीघाते च]। सञ्चरदिति।—मत्स्यपुत्रिका जन्तुविशेषः। कदम्बो नीपवृक्षः, कादम्ब इति पाठः क्वचित्, कलहंसः। ("कादम्बः कलहंसः स्यात्" इत्यमरः) "बतक" इति ख्यातम्। प्रसूतानि बिसप्रसूनानि कमलानि यत्र। ("बिसप्रसूनराजीव-पुष्कराम्भोरुहाणि च" इत्यमरः) बकानीके बकसमूहे। मूको निर्वाक्। कञ्चुकी सर्पः। सौगन्धिकं कह्लारम्। ("सौगन्धिकं तु कह्लारम्" इत्यमरः)। हरिणाश्वो वायुः। ("पृषदश्वो गन्धवहः" इत्यमरः)। कुमुदेत्यादि। निर्बर्हाः गलितपिच्छाः, बर्हिणो यत्र तत्र। कलमगोपिका शालिसंरक्षिका। यूथिका चामेलीति कथामात्रशेषीकृता। बन्धूको बन्धुजीवकः, ("रक्तकस्तु बन्धूको बन्धुजीवकः" इत्यमरः) "दुपहरिया" इति ख्यातम्। विमुद्रिते सौत्राम-धनुषीति पाठस्त्वशुद्धः। काश्मीरं कुङ्कुमम्। विकस्वरं विकसितम्। ("विकासी तु विकस्वरः" इत्यमरः)।

रथ्ये कन्दर्पकेतुः परिभ्रमन् शिलामयीं पुत्रिकां दृष्ट्वा कौतुकेन मोहेन शोकावेगेन मम प्रियाऽनुकारिणीति करेण पस्पर्श ।

अथ सा स्पृष्टमात्रा शिलास्वभावमुन्मृज्य पुनर्वासवदत्तास्वरूपमापेदे । तामालोक्य कन्दर्पकेतुरमृतार्णवमग्न इव सादरमालिङ्ग्य पप्रच्छ—"प्रिये वासवदत्ते ! कथय किमिदं वृत्तान्तम् ?" । उदिता सती सा दीर्घमुष्णं च निःश्वस्य कथयितुमारेभे ।

"आर्य्यपुत्र ! अपुण्यायाः मम मन्दभाग्यायाः कृते महाभाग ! उज्झितराज्य एकाकी प्राकृतजन इव वाङ्मनसयोरगोचरं दुःखमनुबभूव । अद्योपवासादिना कृशतरो मूलफलादिनाऽऽर्य्यपुत्र आहारं करोतीति विचिन्त्य फलान्वेषणायोपवनतरूनवलोकयन्ती कतिपयमल्पगोचरमगच्छं, तत्र च तरुगुल्मान्तरितंक्रियमाणकायमानिकनिकेतनं, विरच्यमानेश्वरगृहम्, अवतार्य्यमाणकण्ठारकम्, आरभ्यमाणपटकुटीकं, व्यवस्थाप्यमानवेश्यानिवेशं, श्रूयमाणतुरगह्रेषाशतं, वाद्य-

---

अथेत्यादि ।

एकाकी असहायः । ["एकादाकिनिच्चासहाये"] ("एकाकी त्वेक एककः" इत्यमरः) । प्राकृतजन इव नीचजन इव । ("प्राकृतश्च पृथग्जनः" इत्यमरः) । वाङ्मनसयोरिति ["अचतुर—" इत्यच्प्रत्ययान्तो निपातः । अथेत्यादि :—अगच्छं याता । अग्रे न सेनासन्निवेशं सेनाशिबिरं, दृष्टेति भिल्लगर्णौ मां प्रति सेनापतिर्धावित इति सम्बन्धः । तरुगुल्मान्तरितं क्रियमाणं रच्यमानं, कायमानिकैः "खामार" इति प्रसिद्धैर्भिन्नशालिपुरुषैः, निकेतनं पटमण्डपं यत्र तम् । ("निवेशः शिबिरोद्वाहविन्यासेषु प्रकाशितः" इति विश्वप्रकाशः) । विरच्यमानं विशेषेण रच्यमानम्, ईश्वरस्य सेनापतेः, गृहं यत्र तम् । अवतार्य्यमाणमश्वादेर्भूमावुत्तार्य्यमाणं, कण्ठारकं "कण्ठालो" इति दाक्षिणात्यभाषायां प्रसिद्धं वस्त्रपात्रादिस्थापनार्थं वस्त्रादिनिर्मितं पात्रम् । व्यवस्थाप्यमानाः यथास्थाने स्थाप्यमानाः, वेश्यानां निवेशो यत्र । श्रूयमाणं ह्रेषाशतं यत्र तम् । ("हेषा ह्रेषा च निःस्वनः" इत्यश्वप्रकरणेऽमरः) । अवन्य-

मानविश्रमढक्काशतपुष्करम्, अन्विष्यमाणस्वादुसलिलाशयम्, उद्दिश्यमानविपणिकेतुवंशं सेनासन्निवेशमपश्यम् । किमर्थं ममान्वेषणाय तातस्य व्यूहः समायातः ? आहोस्विदार्य्यपुत्रस्य ? इति विचारयन्तीं मां प्रति चारकथितवार्त्तः सेनापतिर्धावितः । ततः किरातसेनापतिस्तादृश एव सेनान्वितो मृगयागतः सोऽपि धावितः । अनन्तरं चिन्तितं मया, यद्यहमार्य्यपुत्राय कथयामि तदा स एकाक्येभिरेव हन्तव्यः, अथ न कथयामि तदेभिरहं घातनीयेति चिन्ताक्षणे एव द्वयोः सेनयोर्युद्धमभवदेकामिषलुब्धयोर्गृध्रयोरिव ।

ततः प्रवृत्तप्रतिशरासनशरासारदुर्दिनच्छतदिनकरकिरणे,

---

समाधिः पूर्वमुदिता । वाद्यमानं विश्रमसूचकं ढक्काशतं पुष्करं वाद्यविशेषो यत्र तम्, [ दण्डविशिष्टो विश्रमशब्दस्तत्पुरुष एवेति स्पष्टं भाष्यप्रदीपे ] ( "स्याद्यशः-पटहो ढक्का" इत्यमरः । "पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः । औषध-द्वीपविहग-तीर्थराजोरगान्तरे ॥ पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च ॥" इति विश्वप्रकाशः ) । उद्दिश्यमान उत्पाद्यमानः, विपण्यां पण्यवीथिकायां, केतुर्वंश ; [ दिश अतिसर्जने ] यद्वा—उद्दिश्यमानः केतोरस्मिन् भागेऽस्मदीय आवास इति ज्ञानार्थमुद्देशविषयीक्रियमाणः, केतुर्वंश । आहोस्वित् संशयेऽव्यय-समुदायः । चारेण गूढपुरुषेण, कथिता वार्त्ता वृत्तान्तो यस्मै तादृशश्चारकथित-वृत्तान्तः, ( "चारश्च गूढपुरुषः" इत्यमरः ) । किरातसेनापतिः । ( "भेदाः किरातशबर-पुलिन्दा म्लेच्छजातयः" इत्यमरः ) । मृगयायाः आखेटार्थम्, आगतः । ( "आखेटो मृगया स्त्रियाम्" इत्यमरः ) । अनन्तरं द्वयोरेकदेशागमनोत्तरम् । एका-मिषलुब्धयोः । ( "आमिषं पलले लोभे सम्भोगोत्कर्षयोरपि । आमिषं सुन्दरा-कार-भूपादिविषयेऽपि च ॥" इति विश्वप्रकाशः ) ।

तत एवं रणस्थले सति रणभूमौ, आस्मदंनस्थाने इति यावत् । योधाः सम्मिलेका-वच्छेदेन, द्विषां धनुषां च जीवस्य जीवायाः प्रत्यञ्चायाश्च, आकृष्टिमाकर्षणं, चक्रुरिति सम्बन्धः । अक्रमातिशयोक्तिरलङ्कारः, पूर्वनिपातप्रकरणनित्यत्वे त्वत्यन्तातिशयोक्तिः, "अत्यन्तातिशयोक्तिस्तु पौर्वापर्य्यव्यतिक्रमः" इति वचनात् । प्रवृत्ता यः प्रतिशरासनात् प्रतिधनुषः, शरासारो बाणधारासम्पातः, तेन दुर्दिनं मेघच्छन्नदिनं, तेन छतदिनकर-

रणकर्मविशारद-द्विरददन्तद्वयोत्क्षिप्त-सुभटक्षणश्लिष्यमाणविद्याधरविभ्रमे, समरदर्शननभश्चरदेवनिकायभास्वरचारणचक्रवाले, वेतालसमाक्रान्तस्कन्धकबन्धचक्रक्रियमाणचारुप्रचारे, चारुभटखड्गखण्डित-द्विरदपाद-समाप्त-पिशाचीकर्णान्त्रखलाभरणकौतुके, समुत्पतदतिनिनदनान्दीके, कान्दिशीकभीरुगणे, रणखले शृगालप्रायैर्नीचैष्वामिषपिण्डेष्विव जिह्मगदंष्ट्रास्विव शरीरेष्वनास्थां कलयन्तः समं द्विषां धनुषां च जीवाकृष्टिं योधाश्चक्रुः। त्यागिन इव दानवन्तः, मार्गणसम्पातमसहन्तः, समृद्धविलासिन इव शृङ्गारशोभिताः सहेमकक्षाश्च, मदारामा इव कदलीराजिताः सद्विजाश्च, निशा इव नक्षत्रमालोपशोभिताः, दिवसा इवोल्लसत्पुष्करा महामृगा बभुः। उत्क्षिप्ता इव क्षमां मुञ्चन्तः, पयोधय इवावर्त्तशोभिताः सोर्मयश्च, उद्यानदेशा इव समल्लिकाक्षाः, कुलगृहा इवाभिनवभाण्डहारिणः, रत्नाकरा

---

विरणे सति, गोष्ठे आसारदुर्दिने; ("धारासम्पात आसारः।" "मेघच्छन्नेऽह्नि दुर्दिनम्" इति द्वयोरप्यमरः)। रणकर्मणि विशारदश्चतुरः, द्विरदो हस्ती, तेन दन्तद्वयोत्क्षिप्तः सुभटः शूरः, तेन क्षणं श्लिष्यमाणः आश्लिष्यमाणः, विद्याधरविभ्रमो देवयोनिविशेषविशिष्टभ्रमो येन तस्मिन् सति। समरदर्शनार्थं नभश्चरदेवनिकायभास्वरचारणानां देवकुशीलवानां, चक्रवाले मण्डले सति। ("चारणास्तु कुशीलवाः"। ("चक्रवालं तु मण्डलम्" इति द्वयोरप्यमरः)। चारुभटखण्डितद्विरदपादेन समाप्तं सम्यक् प्राप्तं, पिशाच्याः कर्णे यदन्त्रखलाभरणं तत्कौतुकं यत्र। समुत्पतदतिनिनद एव नान्दी नाटकादौ प्रयुज्यमानः काव्यार्थसूचकः श्लोको यत्र। ["नद्यृतश्च" इति कप्। "न कपि" इति ह्रस्वनिषेधः]। तथा च भरतः,—"आशीर्नमस्क्रियारूप-श्लोकः काव्यार्थसूचकः। नान्दीति कथ्यते"। कान्दिशीको भयपलायितः। ("कान्दिशीको भयद्रुतः" इत्यमरः)। भीरुः। ("शृगाले वञ्चके भीरुः शूरे वे दानवान्तरे" इति विश्वः)। जिह्मगः सर्पः। ("जीवा जीवन्तिकाभूम्योर्मौर्व्यां शिञ्जितवस्तुषु" इति विश्वप्रकाशः)। त्यागिन इव दातार इव, दानं मदजलवितरणं, मार्गणानां बाणानां याचकानां च, सम्पातमसहन्तो महामृगा गजाः, रेजुः। ("महामृगः पुष्करिदीर्घमारुतौ" इति हारावली)। उत्क्षिप्ता इवात्यवस्थितचित्ता

इव सदेवमणय:, लेखा इव सेन्द्रद्युतय: तुरङ्गाश्च विरेजु:। कर्णाभ्यां श्रुतपरपरिवादाभ्यां, खलोदयसाधुविपत्तिसाक्षिभ्यामक्षिभ्यां, मूर्द्ध्ना चास्थानेऽपि नमता विमुक्तोऽहमिति हर्षादिव ननर्त्त चिरं कबन्ध:। तत: कृतपरिहासेनेव चक्षु: पिदधता, परापवादश्रवणभीरुणेव श्रोत्रवृत्तिं स्थगयता, सोन्मादेनेव वायुवेगविक्षिप्तेन पलितङ्करणेनेव सुरयोषिताम्, अन्धङ्करणेनेव योधानां, तिमिरेणेव समरप्रदोषस्य, पतितेनेव विमुक्तगोत्रेण, मीमांसकदर्शनेनेव तिरस्कृतदिगम्बरदर्शनेन, सत्पुरुषेणेव विष्णुपदावलम्बिना रणजेन रजसा जजृम्भे। कश्चिद्राम इव रावणवधमकरोत्। कश्चित् कृष्ण इव नरकच्छेदमकार्षीत्। कश्चिद्बौद्धसिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत्। कश्चित् क्षपणक इव कटाहतो बभूव। कश्चिदाशङ्कितोरुभङ्ग: सुयोधन इव पयांसि विवेश। कश्चित् शरतल्पगतो भीष्म इव चिराय श्वसन्नासीत्। कश्चित् कर्ण इव विक्लवीकृत-

---

इव, धना शान्तिं पृथ्वीं च। तुरङ्गा अश्वा:, विरेजु:। ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्ध-कलेवरम्" इत्यमर:) इत्थं कबन्धनर्त्तनं, श्रुतपरपरिवादाभ्यां परापवादाभ्याम्। साक्षी साक्षाद्द्रष्टा। ["साक्षाद्द्रष्टरि संज्ञायाम्" इति साधु:]। अस्थाने महानर्थस्थाने, नमता। ततो रजसा जजृम्भे प्रादुर्भूतम्। [जृभि गात्रविनामे, भावे क्त:]। कृतपरिहासेनेव चक्षु: पिदधता आच्छादयता, लोकप्रसिद्धमेतत्। वायुरान्तरो बाह्यश्च। योधानां भटानां, पलितङ्करणेन। ("पलितं जरसा शौक्ल्यम्" इत्यमर:) ("आढ्यसुभग" इति करणे ख्युन्। "अरुर्द्विषत्—"इति मुम्]। समरप्रदोषस्य रणरजनीमुखस्य। पतितेन इव महापातकिनेव, विमुक्तगोत्रेण गोत्रं वंश:, गोत्रा पृथ्वी। आशङ्कित ऊर्वोर्भङ्गो येन; पक्षे—ऊरुसंहतान्, भङ्ग: पराजय:। शरतल्पं शरशय्याम्। चिराय कार्त्तिकशुक्लदशमीमारभ्य माघशुक्ला-ष्टमीपर्यन्तमित्युदयशङ्करपाठका:; पक्षोपपत्तिस्तु तेषां मतो द्रष्टव्या; पक्षे—("चिराय चिररात्राय चिरस्येति चिरार्थका:" इत्यमर:)। विक्लवीकृतं विह्वली-

सर्वाङ्गः शक्तिमोक्षमकरोत्। ततो विध्वस्तध्वजपटं, पतत्पताकं, च्युतचापचामरापीडं, स्खलत्खड्गं निधनमवाप सैन्यम्।

अनन्तरं यस्याश्रमस्तेन मुनिना पुष्पादिकमादायागतेन प्रतिपन्नवृत्तान्तेन त्वत्कृते ममायमाश्रमो भग्नोऽतः शिलामयी भवेति शप्ताऽहम्। क्षणेन च वराकीं बहुदुःखमनुभवन्तीं मां विलोक्यार्यपुत्रकरस्पर्शावधिं शापान्तमकरोत्"।

ततः कन्दर्पकेतुः सममागतेन वासवदत्तया च सह स्वपुरं गत्वा यथाहृदयाभिलषितानि सुखान्यनुभवन् कालं निनाय।

इति महाकविसुबन्धुविरचिता वासवदत्ता
समाप्ता।

भूतं, सर्वाङ्गं यस्य, शक्तेर्बलस्य, मोक्षं त्यागम्; पक्षे—शक्तेर्वासवदत्ताया अमोघायाः, मोक्षं घटोत्कचे त्यागम्। ("शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम्" इति हेमचन्द्रः)। निधनं मरणम्। ("मरणं निधनोऽस्त्रियाम्" इत्यमरः)।

प्रतिपन्नवृत्तान्तेन ज्ञातवृत्तान्तेन। अमा [ अमंधिज्ञः ]। क्षणेन च वराकीं बहु दुःखं भवद्वियोगजम्, अनुभवन्तीं मां विलोक्य शापं शिलामयत्वरूपम्, आर्य-पुत्रस्य करस्पर्शोऽवधिरन्तोऽस्य तादृशमकरोत्। "नागरोक्त्याऽऽर्यपुत्रेति नाट्योक्त्या च प्रयुज्यते" इति भरतः।

ततः कन्दर्पकेतुः समं वासवदत्तासङ्गमसमकालम्, आगतस्तेन मकरन्देन, वासव-दत्तया च सह स्वपुरं कुसुमपुरं, गत्वा हृदयं मनोऽनतिक्रम्य यथाहृदयं मनोऽनु-रूपम्, अभिलषितं येषु तानि सुखानि सम्भोगशृङ्गारसम्बन्धीनि, अनुभवन् कालं निनाय। ("चेतो हृदय स्वान्तं हृन्मानसं मनः" इत्यमरः)।

वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। ["अधिकृत्य कृते ग्रन्थे" इत्यर्थे वृद्धाच्छः। तस्य "लुबाख्यायिकाभ्यो बहुलम्" इति लुप्] वासवदत्ताऽऽख्या-यिका समाप्तेति पाठस्तु भ्रममूलकः।

वासवदत्ताव्याख्या समाप्ता।

---

प्रकाशक— पण्डित-श्रीभाग्यबोधविद्याभूषण
तथा
पण्डित-श्रीनित्यबोधविद्यारत्न ।

प्राप्तिस्थान— २न०, रमानाथ मजुमदार ष्ट्रीट, आम्हार्ष्ट
ष्ट्रीट पोष्ट-अफिस । कलिकाता ।

प्रिण्टर—वि, वि, मुखर्जी ।
२ नं०, रमानाथ मजुमदार ष्ट्रीट, कलिकाता ।